# Every Saturday will be
# FUNDAY
# for children
## of Maharashtra and elsewhere




An 8-page supplement to MID-DAY
with a lot of variety and in glorious colour
designed by CHANDAMAMA,
is being issued from MARCH 11, 2000.



**HERE'S AN INVITATION OFFER**
TO READERS OF **MID-DAY**

Subscribe to **CHANDAMAMA** (in any one of the 12 languages) at the SPECIAL RATE of Rs 96* for 12 issues (instead of Rs.120).




### *What you have to do:*

Cut out the coupon appearing in MID-DAY – FUNDAY supplement and send it to the address below along with a cheque/DD for Rs 96.

**PUBLICATION DIVISION**
**CHANDAMAMA INDIA LTD.**
**VADAPALANI, CHENNAI 600 026**

*PLEASE NOTE: The offer closes on May 31, 2000

# चन्दमामा

सम्पुटः - १७   जून् - २०००   सञ्चिका - ३



## अन्तरङ्गम्

**कथाः**



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, Chandamama Buildings, Vadapalani, Chennai–600 026. Editor: Viswam

## एतस्य अङ्कस्य विशेषाः



अविवेकिता राज्ञः, उत शिल्पिनः ?
(वेतालकथा)



शिवस्य विवाहः



सुवर्णसिंहासनम्

अभिव्यज्यताम् !
पुरस्कारः प्राप्यताम् !!



# चन्दमामा

## मे - २०००



# उत्तराणि

१. सः मुनिः तिरुवल्लुवरः । पत्न्याः नाम वासुकिः इति ।

२. अ. धृतराष्ट्रः गान्धारजातां गान्धारीं परिणीतवान् आसीत् ।

आ. सावित्री साल्वराजकुमारं सत्यवन्तं परिणीतवती आसीत् ।

इ. सहदेवस्य माता माद्री मद्रदेशीया ।

ई. कर्णः अङ्गदेशस्य राजत्वेन अभिषिक्तः ।

उ. बभ्रुवाहनः मणिपुरराजकन्यायां चित्राङ्गदायाम् अर्जुनात् जातः ।

३. १. कथासरित्सागरः ।

२. धारानगरी इति नाम ।

३. भासः

४. भर्तृहरिः । तस्य कृतयः - शृङ्गारशतकं, वैराग्यशतकं, नीतिशतकं चेति ।

५. उत्तरकाण्डः ।

---

### अवधीयताम् -

१. एप्रिल्सञ्चिकीयायाः प्रश्नावल्याः समुचितम् उत्तरं पूर्णतया केनापि न लिखितम् ।

२. प्रश्नावलीस्पर्धायां भागं ग्रहीतुं ये इच्छन्ति ते निवेद्यन्ते यत् प्रश्नावलीनियमान् सम्यक् परिशीलनीयाः पालनीयाः च इति । नियमपालनम् अकृतवताम् उत्तराणि स्पर्धार्थम् अनर्हत्वेन परिगण्यन्ते ।

# सर्जनात्मिकाः स्पर्धाः

## चन्दमामा

### वाचकान् निमन्त्रयति

अधोनिर्दिष्टेषु क्षेत्रेषु
कल्पनां विस्तारयितुं
सर्जनात्मकसाहित्यं
स्रष्टुं च....





## छायाचित्रस्य

### अनुशीर्षिकास्पर्धा

**१. चित्रशीर्षिकास्पर्धायाः पृष्ठार्थम् -**

केनचित् क्रमेण परस्परं सम्बद्धं चित्रयुगलम् प्रेषयितुम् अर्हन्ति उदीयमानाः चित्रग्राहकाः । चित्रप्रेषणसमये चित्रकारः परस्परसम्बन्धस्पष्टतार्थं स्वस्य आशयम् अवश्यं लिखित्वा प्रेषयेत् ।

**चिताय चित्रयुगलाय**

**रू. ५००/- दीयन्ते पारितोषिकरूपेण**

स्पर्धार्थं चित्रयुगलं यदाकदाचिदपि प्रेषयितुं शक्यम् ।



**२.** अधोलिखितां लोकोक्तिं सूक्तिं वा अधिकृत्य स्वकीयम् अनुभवं, लघुकथां (नूतनां प्राचीनां वा) प्रेषयितुम् अर्हन्ति भवन्तः । एतदत्र स्मर्तव्यं यत् लोकोक्तिः सूक्तिः वा यां मूलकल्पनाम् आधारीकृत्य प्रवृत्ता, सा न अङ्गीक्रियते । अतः भवदीया कथा ततः अन्या स्यात् ।

एतन्मासीयस्पर्धार्थं लोकोक्तिः -

**"विवेकभ्रष्टानां भवति विनिपातः शतमुखः"**

**चितायै रचनायै रू. ५००/- दीयन्ते पारितोषिकत्वेन**

*रचनां प्रेषयितुम् अन्तिमदिनाङ्कः -*

**३०, जून् - २०००**

पुरस्कृता रचना अगस्ट् - २००० सञ्चिकायां प्रकाशयिष्यते ।

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**

# विरामकालस्य मध्यभागे ....

'यदि समग्रं वर्षं क्रीडनार्थक-विरामयुक्तं स्यात् तर्हि क्रीडा अपि कार्यम् इव भारभावजनिका स्यात्' इति वदति शेक्सपियरः । एतस्मात् वयम् एवं वक्तुं शक्नुमः यत् यः सदापि श्रद्धया कार्यं करोति सः एव वस्तुतः विरामसुखम् अनुभवितुम् अर्हति इति ।

अस्माकं वाचकगणस्य महान् भागः दीर्घकालिकस्य ग्रीष्मविरामस्य मध्यभागे अस्ति । वयं येन क्रमेण विरामकालं यापयामः सः क्रमः एव अस्मज्जीवनस्य गुणस्तरं निरूपयति । यदा किमपि कार्यं आदिश्यते केनचित्, तदा तत् करणीयम् एव भवति इच्छया अनिच्छया वा । किन्तु यदा कार्यचयनस्य अवसरः भवति, तदा यत् अस्मभ्यं रोचते तदेव चेतुं शक्नुमः ।

विरामकालः तादृशं कार्यचयनस्वातन्त्र्यार्थम् अवकाशं कल्पयति । किन्तु क्वचित् कार्यकरणार्थं योजनां कृत्वा अपि समयं दातुं न शक्नुमः । अत्र प्रमुखं कारणं - प्राप्तस्य विरामस्य सदुपयोगः कथम् इति परिज्ञानस्य अभावः । मनसि उत्तमाः विचाराः भवन्ति, कार्यसाधनमार्गाः अपि अपूर्वाः स्फुरन्ति, तथापि कथम् आरम्भः करणीयः, कथम् आरब्धस्य अनुवर्तनं करणीयम् इति अजानन्तः वयं कार्ये अप्रवृत्ताः भवामः । किन्तु यदा दिनानि गतानि भवन्ति निरुपयोगं, तदा कदाचित् अन्ते ज्ञानोदयः भवेत् । किन्तु तावता विरामः समाप्तः भवति ।

एतावता तु विरामः न पूर्णतः समाप्तः । अतः अवशिष्टं तं कालम् आनन्दमयं विधातुं योजना करणीया अस्माभिः । इतिहासः, देशभक्तिः, संस्कृतिः इत्यादिभिः सम्बद्धाः ग्रन्थाः पठितुं शक्याः । परिसरस्य मालिन्यस्य निवारणार्थं, सौन्दर्यस्य वर्धनार्थं वापि कार्यं कर्तुं शक्यम् । गृहपरिसरे एव सस्यानि आरोप्य पोषयामः चेत् वयं तु लाभान्विताः स्याम, परिसरः अपि लाभान्वितः भवेत् । एतादृशविषयेषु मार्गदर्शनं कर्तुं सन्ति बह्व्यः संस्थाः ।

अतः उत्तमपुस्तकपठनेन, वृक्षादिसंवर्धनेन, अन्येन केनचित् समाजोपयोगिकार्येण वा यदि वयं विरामकालस्य उपयोगं कुर्याम तर्हि लाभः, तृप्तिः, उपकारः च युगपत् एव सिद्ध्येत् ।

# वार्ताविशेषः

## शेक्स्पीयर् किम् इटलीदेशीयः ?



सिसिलीदेशीयः प्रा॰ मार्टिनो लुवीरः (७१ वर्षीयः) वदति यत् विलियं शेक्स्पीयरः मूलतः इटलीदेशीयः एव, तस्य च नाम मैकेलञ्जलो इति आसीत्, २८ तमे वयसि सः लण्डन्नगरं गत्वा तत्र वासम् आरब्धवान् इति । 'एतत्कारणतः एव शेक्स्पीयरेण लिखितेषु ३७ रूपकेषु १५ रूपकाणि इटलीपृष्ठभूमिकायुतानि' इति प्रतिपादयति सः ।

## व्याघ्रसन्ततिः नाशोन्मुखा

ब्रिटन्देशस्य परिसरमन्त्री वदति - ''व्याघ्राणां मारणं यदि एवम् एव अनुवर्तेत तर्हि अग्रिमेषु दशसु वर्षेषु प्रकृतेः अपूर्वसृष्टिरूपा व्याघ्रसन्ततिः अदृश्यतां गमिष्यति'' इति । चीनादेशीयाः व्याघ्राङ्गानि आधारीकृत्य विविधानि औषधानि निर्मान्ति । एतदर्थं ते



भारतीयान् मृगयाचौरान् एव अवलम्बन्ते । भारते तु चर्मनिमित्तं व्याघ्रमारणं प्रचलति एव आ बहोः कालात् ।

## ऐन्स्टैन्सिद्धान्तः कम्पते !

पोर्चुगल्देशीयः तरुणविज्ञानी डा॰ जोयो मेग्युयोजो प्रयत्नं कुर्वन् अस्ति यत् ऐन्स्टैनेन यथा प्रतिपादितं तथा प्रकाशवेगः नास्ति इति प्रतिपादनीयम् इति । सः स्वकीये शोधप्रबन्धे एतद्विषये बहूनि प्रमाणानि उदाहृत्य स्वमतप्रतिपादनं कृतवान् अस्ति । अतः विंशतिशतकीयः कश्चन प्रबलः विश्वासः इदानीं परिवर्तनीयः भविष्यति ।



## अपूर्वः अष्टग्रहयोगः

मे-मासस्य अन्तिमे सप्ताहे एका अपूर्वा घटना घटिता । सूर्य-चन्द्र-मङ्गल-बुध-गुरु-शुक्र-शनिग्रहाः एकरेखायाम् आसन् । एतादृशी घटना



इतःपूर्वं ५२९ तमवर्षस्य मे-मासे - तन्नाम सार्धैकसहस्रवर्षेभ्यः पूर्वं - प्रवृत्ता आसीत् । इदानीं दृष्टः अयम् अष्टग्रहयोगः भूखण्डस्य हिताय एव भवति इति अभिप्रयन्ति ज्योतिशशास्त्रज्ञाः ।

# A PEEP INTO OUR READERS' MIND

This is the FIFTH issue in your hands since *Chandamama* was re-launched in December 1999. We have no doubt you have enjoyed reading the previous four issues. And you might have noticed that while the magazine has retained the flavour for which it is famous for the last 50+ years, it has undergone a lot of changes in content and upped its layout and design and illustrations – not to speak of the better quality paper. We have tried to make each issue a shade better than the previous one. Of course, the several letters that we received in the last hundred days have proved that the improvements have not gone unnoticed. We do not wish to rest on our oars, but feel that more improvements have to be guided by what our readers want to see included in the magazine, also what they sincerely feel could be dropped for alternative items. Would you not open up your minds for our sake? We would like each one of you to answer the questions given below, cut out the sheet where it is indicated, and mail it to us as quickly as possible. You will see, we have made the exercise very simple. In most cases, you have only to put a tick mark (✓) in the appropriate squares. Here we go!

I. Issues come to me ☐ through subscription
I buy the issues ☐ from the newspaper boy
I buy the issues ☐ from a news stand
I borrow the issues ☐ from a friend/library

II. I also read regularly/occasionally

☐ Comics ☐ Story Books ☐ Other children's magazines.................................(Identify by name)

III. I read the magazine in English / Telugu / Tamil / Malayalam / Kannada / Hindi / Marathi / Gujarati / Bengali / Assamese/ Oriya / Sanskrit.
*(Underline the language of your choice)*

IV. In the last four months, I read

☐ 4 issues ☐ 3 issues
☐ 2 issues ☐ 1 issue

V. I would rate the features as follows :

☐ Serial story ☐ Mythology ☐ Vikram-Vetala tale
☐ Tales from many lands ☐ Other stories
☐ Unsolved mysteries ☐ Saga of India ☐ Biography
☐ Newsflash ☐ India, Then and Now
☐ Discovery of India Quiz ☐ Puzzles / contests
☐ The World Today ☐ Towards Better English
☐ Let us know ☐ Story of Rivers

*(Show your preferences by serially numbering the squares 1 to 16)*

VI. I would like *Chandamama* to include the following features :
*(in the order of priority)*

i................................ iv.................................
ii. ................................ v.................................
iii................................ vi.................................

VII. I would like the cover picture to depict :

☐ a sequence from the adventure serial ☐ a scene from mythology
☐ an action from any other story.

VIII. I feel the price of Rs. 10 for a copy is ☐ too high ☐ affordable
☐ may be reduced *(by using cheaper paper)*

IX. i) I am a subscriber ii) I want to become a subscriber

Name................................................ Age ...............
Class ...............School ................................................
Address ................................................................
................................................................................
............................. PIN.................... State.................

iii) I go to school ☐ by my bike ☐ by school bus ☐ by city bus
☐ by my parent's vehicle

iv) I get pocket money ☐ less than Rs. 100 ☐ more than Rs. 100

*Parent's Signature* *Signature*



# वेताल-कथा

## अविवेकिता राज्ञः, उत शिल्पिनः ?

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोपितवान् । ततः वृक्षात् अवतीर्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! लक्ष्यस्य साधनार्थं भवान् एतस्मिन् घोरे श्मशाने प्राणान् अपि पणीकृत्य महान्तं परिश्रमं कुर्वन् अस्ति । सफलता न प्राप्ता चेदपि अद्यावधि भवता अल्पा अपि निराशा न प्राप्ता । अतः भवतः



सङ्कल्पदृढता, साहसप्रवृत्तिः, धैर्यं च निश्चयेन श्लाघ्यानि एव । किन्तु भवतः विषये कश्चन सन्देहः अपि बाधते माम् । आत्मनि स्थितायाः बुद्धिमत्तायाः प्रेरणया भवान् कार्यं करोति, उत मूर्खतायाः प्रेरणया इति मया न अवगतम् । अहं बुद्धिमत्तया प्रेरितः अस्मि इति चिन्तयन् भवान् मूर्खतया प्रेरितः अपि स्यात् कदाचित् कलाकारः विरागशर्मा इव । सः विरागशर्मा मूर्खतया प्रेरितः आसीत् इत्यतः महान्तं प्रयत्नं कृत्वा अपि अन्ते फलप्राप्तिसमये प्रयत्नात् विमुखः जातः । भवतः मार्गायासपरिहारार्थं तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं चक्रवाकराज्यं शशिधरवर्मा नाम राजा पालयति स्म । तस्य एकमात्रपुत्री चम्पकमाला । अनुपमसुन्दरी सा । राजपरिवारस्य महिलाः असूर्यम्पश्याः आसन् । अतः चक्रवाकराज्यस्य जनाः न जानन्ति स्म यत् चम्पकमालायाः सौन्दर्यं कीदृशम् इति ।

कदाचित् चम्पकमाला पितरं निवेदितवती यत् अहं मम प्रतिमां द्रष्टुम् इच्छामि इति । पुत्र्याः इच्छायाः पूरणार्थं राजा राज्यस्य सर्वान् शिल्पिनः निमन्त्रितवान् । कल्पनाबलेन एव राजकुमार्याः प्रतिमा निर्मातव्या आसीत् । यतः राजकुमारीं द्रष्टुं कस्यापि अनुमतिः न आसीत् । एवं स्थिते अपि बहवः कलाकाराः राजधानीम् आगत्य कल्पनाबलेन सुन्दरीः प्रतिमाः निर्मितवन्तः । किन्तु तासु काऽपि राजकुमार्याः सौन्दर्यं न प्रतिबिम्बयति स्म । अतः खिन्नः राजा पुनः उद्घोषितवान् - ''यः शिल्पी राजकुमार्याः अपूर्वप्रतिमां निर्माति सः प्रधानशिल्पिस्थाने प्रतिष्ठापयिष्यते'' इति ।

तरुणशिल्पी विरागशर्मा एतां घोषणां श्रुतवान् । सः वज्रकूटे शिल्पशास्त्रस्य अध्ययनं समाप्य वृत्तिक्षेत्रस्य प्रवेशार्थं मार्गं चिन्तयन् आसीत् । तदीयः पिता प्रकम्पनशर्मा अपि श्रेष्ठः शिल्पी एव । वार्धक्यकारणतः सः शिल्पकार्यं स्थगितवान् आसीत् । गृहम् आगतः विरागशर्मा पितरं पृष्टवान् - ''सकृत् अपि अदृष्टायाः राजकुमार्याः प्रतिमायाः निर्माणं किं केनचित् वा कर्तुं शक्यम् ?'' इति ।

एतत् श्रुत्वा पिता प्रकम्पनशर्मा मन्दहास-

पूर्वकम् अवदत् - ''भवतः एषः प्रश्नः सहजः । अन्ये अपि शिल्पिनः एतं प्रश्नं पृच्छन्तः सन्ति । सकृत् अपि अदृष्टायाः अपि राजकुमार्याः प्रतिमायाः निर्माणं कष्ट-साध्यं स्यात्, न तु असाध्यम् । योगशक्त्या मन्त्रतन्त्रादिबलेन वा मनसः एकाग्रतां सम्पाद्य निर्मातुम् इष्टस्य शिल्पस्य स्वरूपम् अन्त-श्चक्षुषा द्रष्टुं शक्यम् । प्राचीनाः बहवः शिल्पिनः एतादृशं सामर्थ्यं प्राप्तवन्तः आसन् । अतः एव ते मन्दिरादिषु देव-देवतादीनाम् अपूर्वप्रतिमाः निर्मातुं शक्त-वन्तः'' इति ।




''योगशक्तिं विना किम् एतत् कार्यं सर्वथा असाध्यम् ?'' इति मध्ये अपृच्छत् विरागशर्मा ।

''असाध्यं किं वा अस्ति लोके ? अलौकिकशक्तीनां साहाय्येन अपि तादृशं सामर्थ्यं प्राप्तुं शक्यम् । अस्माकं राज्यस्य आग्नेयदिशि अरण्यप्रदेशे प्रत्यमावास्यं यक्षाः सम्मिलन्ति । देवगणीयाः ते मन्त्रतन्त्रकोविदाः असाध्यसाधकाः च भवन्ति । तेषां साहाय्यं प्राप्तं चेत् अदृष्टायाः अपि राजकुमार्याः प्रतिमा अवश्यं निर्मातुं शक्या'' इति अवदत् प्रकम्पनशर्मा ।

''एवं तर्हि किम् अहं यक्षाणां साहाय्येन राजकुमार्याः प्रतिमां निर्मातुं शक्नुयाम् ?'' इति अपृच्छत् विरागशर्मा ।

''कुतो न ? साहसं करणीयं जीवने । साहसे श्रीः प्रतिवसति । प्रधानशिल्पित्वं प्राप्तव्यम् इति ममापि इच्छा आसीत् । किन्तु सा सफला न जाता । यदि भवान् यक्षाणां साहाय्येन राजकुमारीप्रतिमां निर्माय प्रधान-शिल्पिपदे प्रतिष्ठितः भवेत् तर्हि महान् आनन्दः स्यात् मम । यक्षाणां साहाय्येन बहवः स्वमहत्त्वाकांक्षां पूरयितुं शक्तवन्तः इति कथा श्रूयते । अतः भवान् अपि प्रयत्नं करोतु नाम'' इति वदन् पुत्रं प्रोत्साहितवान् प्रकम्पनशर्मा ।

पितुः आशीर्वादं प्राप्य अनन्तरदिने एव विरागशर्मा अरण्यं प्रति प्रस्थितवान् । अमावास्यादिने सूर्यास्तसमये सः यक्षभूमिं प्राप्तवान् ।

सः सरोवरस्य कस्यचित् तीरे वृक्षस्य अधः उपविश्य गृहात् आनीताः रोटिकाः खादित्वा सरोवरजलं पीत्वा विश्रान्त्यर्थं सुखेन उपविष्टवान् । श्रान्तिकारणतः तस्य नेत्रे



निमीलिते जाते ।

अल्पे एव काले सुन्दर्योः कयोश्चित् हासध्वनितः तस्य निद्रा भग्ना । तयोः आकारस्य, वेशभूषणस्य, आभरणादीनां च दर्शनात् विरागशर्मा अवगतवान् यत् एते यक्षकुले जाते एव इति ।

कथं वार्तालापस्य आरम्भः करणीयः इति यावत् सः चिन्तयन् आसीत् तावता तयोः अन्यतरा यक्षकन्या अपृच्छत् - ''अये, मानवयुवक ! एतस्मिन् रात्रिकाले घोरारण्ये कथम् उपस्थितः भवान् ? अत्र किं कार्यं भवतः ?'' इति ।

विरागशर्मा ते विनयेन प्रणम्य स्वस्य आगमनस्य उद्देशं निवेद्य तयोः साहाय्यं प्रार्थितवान् ।

ते परस्परं समालोचनं कृतवत्यौ । ततः एका उक्तवती - ''सकृदपि दर्शनं विना कस्याश्चित् व्यक्तेः प्रतिमायाः निर्माणं सर्वथा असम्भवम् । असम्भवम् अपि तत् कार्यम् आवां सम्भवं कर्तुं शक्नुवः । आवाभ्याम् उच्यमानं कृतं चेदेव आवां तत् करिष्यावः । मम नाम चपला इति । मम सख्याः नाम चञ्चला इति । यदि भवान् आवयोः प्रतिमायाः निर्माणम् अङ्गीकुर्यात् तर्हि राजकुमारीम् आवाम् अत्र एव आनीय दर्शयिष्यावः'' इति ।

विरागशर्मा तयोः यक्षकन्ययोः नियमम् अङ्गीकृतवान् । ततः चपला कमपि मन्त्रं जपन्ती चञ्चलां स्पृष्ट्वा उक्तवती - ''भवता द्रष्टुम् इष्टा राजकुमारी चम्पकमाला एषा एव । एतां दृष्ट्वा प्रतिमां निर्मातुम् अर्हति भवान्'' इति ।

अनन्तरक्षणे एव राजकुमारी चम्पकमाला तस्य पुरतः स्थितवती । तां दृष्ट्वा विरागशर्मा आश्चर्यचकितः ।

''चञ्चला कुत्र गता ?'' इति आश्चर्येण पृष्टवान् विरागशर्मा ।

''अहम् एव चञ्चला । मया राजकुमार्याः रूपमात्रं धृतम् । किं मम कण्ठस्वरः न अभिज्ञायते ?'' इति पृष्टवती राजकुमारी-रूपेण स्थिता चञ्चला ।

''अहो, आश्चर्यम् ! यक्षकन्यकाः भवत्यः असाध्यम् अपि साध्यं कर्तुं समर्थाः । किन्तु प्रतिमा निर्मातव्या चेत् श्रेष्ठा शिला खलु आवश्यकी ? प्रकाशः अपि आवश्यकः । प्रकाशस्य अभावे कथं वा शिल्प-

निर्माणम् ?'' इति उक्तवान् विरागशर्मा ।

चपला पुनरपि मन्त्रोच्चारणं कृतवती । अनन्तरक्षणे एव शिल्पार्थम् अपेक्षिता शिला प्रत्यक्षा जाता । राजकुमारीरूपस्य उपरि कौमुदीप्रकाशः पतितः । विरागशर्मा आत्मना सह आनीतानां टङ्कादीनां साहाय्येन शिल्प-निर्माणम् आरब्धवान् ।

तस्य कार्यस्य मन्दप्रगतिं दृष्ट्वा चञ्चला उक्तवती - ''भवतः कार्यस्य वेगः अत्यल्पः । यदि एतेन एव वेगेन कार्यं क्रियेत तर्हि मासात्मके अपि काले भवतः कार्यं समाप्तं न भवेत् । अतः भवतः टङ्कादिसाधनेषु शतगुणितां शक्तिं पूरयामि । शीघ्रातिशीघ्रं कार्यं समापयतु'' इति ।

विरागशर्मा तल्लीनतया कार्यं कुर्वन् घण्टाभ्यन्तरे राजकुमार्याः प्रतिमां सज्जी-कृतवान् । ततः यक्षकन्ययोः कृते कृतज्ञतां समर्पयन् सः उक्तवान् - ''भवत्योः कृपया असाध्यम् अपि कार्यं साध्यं जातम् । तदर्थं कोटिशः कृतज्ञतां समर्पयामि । यदि भवत्यौ एतां प्रतिमां मम गृहं प्रापयतः तर्हि अग्रिमायाम् अमावास्यायाम् आगत्य भवत्योः प्रतिमे निर्मास्यामि'' इति ।

''नेत्रनिमीलनं करोतु । अचिरात् एव भवतः इष्टं सिद्धं भविष्यति'' इति उक्तवत्यौ ते कन्यके ।

नेत्रनिमीलनानन्तरं क्षणाभ्यन्तरे एव सः प्रतिमासहिततया स्वगृहस्य अङ्गणे उपस्थितः जातः ।

यदा सूर्योदयः जातः तदा सूर्यकिरणाः प्रतिमायाः उपरि पतिताः । तदा तु प्रतिमा



अत्यपूर्वतया अशोभत । विरागशर्मा प्रवृत्तं समग्रं पितरं निवेद्य अवदत् - ''तात ! भवतः आशीर्वादेन प्रोत्साहनेन च एतत् कार्यम् सिद्धम्'' इति ।

सः तस्मिन् एव दिने राज्ञे सन्देशं प्रेषितवान् - ''राजकुमार्याः प्रतिमा सिद्धा अस्ति । राजभवनं प्रति तां नेतुं व्यवस्था करणीया'' इति ।

राजा प्रतिमां राजभवनं प्रति आनायित-वान् । प्रतिमायाः सौन्दर्यम् उत्कृष्टतां च दृष्ट्वा राजा आश्चर्यचकितः । राजकुमारी चम्पकमाला प्रतिमां दृष्ट्वा उक्तवती - ''अहो अपूर्वः शिल्पः ! मम प्रतिबिम्बम् इव अस्ति एतत् । एतादृशी अपूर्वसृष्टिः न दृष्टपूर्वा, न वा श्रुतपूर्वा'' इति ।



राजा शशिधरवर्मा राजसभाम् आयोज्य पूर्णायां सभायां विरागशर्मणः शिल्पकला-कौशलस्य प्रशंसां कृत्वा तम् उद्दिश्य अवदत् - ''भवत्सदृशः शिल्पी प्रपञ्चे अन्यः न स्यात् इति भाति मम । मम भागिनेयी मञ्जुला तु भवन्तं विश्वकर्माणम् उक्तवती । तस्याः काचित् इच्छा अस्ति यत् एतादृशी एव मदीया प्रतिमा अपि निर्मापणीया इति । अतः तस्याः प्रतिमायाः निर्माणं करोतु कृपया इति प्रार्थना मम । तन्निर्माणसमाप्तेः अनन्तरसप्ताहे एव भवन्तं प्रधानशिल्पिस्थाने नियोजयिष्यामि'' इति ।

राज्ञः वचनं श्रुत्वा विरागशर्मा म्लानमुखः क्षीणोत्साहश्च जातः । सः क्षणकालं विचिन्त्य अवदत् - ''प्रभो, अहं गृहं गत्वा किञ्चित् विचिन्त्य मम निर्णयं कथयिष्यामि । तदर्थं दिनद्वयात्मकः कालः अपेक्षितः । इदानीं गमनार्थम् अनुज्ञा दातव्या'' इति ।

राज्ञः अनुज्ञां प्राप्य राजधानीतः निर्गतः विरागशर्मा गृहं प्राप्य पितरम् अवदत् - ''श्वः प्रातःकाले एव आवां वज्रकूटस्थं गुरोः गुरुकुलं गच्छाव । तत्रैव स्थित्वा यथाशक्ति कलासेवां करवाव । सः प्रदेशः एतस्मात् राज्यात् बहिः अस्ति । तत्रैव गृहं निर्माय निश्चिन्ततया जीवनं यापयाव । तस्य प्रदेशस्य राजा शशिधरवर्मतः अपि अधिकज्ञानी समर्थः च । यद्यपि तेन विशेषप्रोत्साहः न दीयेत, तथापि शशिधरवर्मा इव पीडां तु न दद्यात्'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! विरागशर्मा बुद्धिमान्, ज्ञानी, साहसी च स्यात् नाम । तथापि तस्मिन् अविवेकिता अपि अस्ति इति तु अङ्गीकरणीयम् एव । राज्यस्य प्रधानशिल्पि-स्थानं प्राप्तव्यम् इति स्वप्नं पश्यन् आसीत् सः । तदर्थम् एव तेन महान् परिश्रमः अनुष्ठितः अपि । किन्तु प्रधानशिल्पित्व-प्राप्तिक्षणः यदा सन्निहितः तदा सः स्वमतिं परिवर्तितवान् । किम् एतत् विवेकिनः लक्षणम् ?

यक्षकन्ययोः साहाय्येन यथा चम्पक-मालायाः प्रतिमा निर्मिता तथैव मञ्जुलायाः प्रतिमायाः निर्माणम् अपि कर्तुं शक्यम् आसीत् । अल्पः श्रमः पुनः कृतः चेत् गौरवं सम्पत्तिः च प्राप्तुं शक्यम् आसीत् । एवं स्थिते अपि सः तम् स्थानप्राप्तिविचारं



*या सम्पत्तिः परोपकाराय न विनियुज्यते सा विद्युत् इव क्षणमात्रं विद्योतमाना अचिरात् विनश्यति ।*

**– कथासरित्सागरः**

परिवर्तितवान् किमर्थम् ? राज्यत्यागविचारः किमर्थं कृतः तेन ? ज्ञानित्वम् अविवेकित्वं च तस्मिन् अस्ति इत्येतस्य किं प्रमाणान्तरम् अपेक्ष्यते ? किं भवान् विरागशर्मणः ज्ञानित्वं प्रतिपादयितुम् इच्छति ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् -''वस्तुतः 'राजकुमारीम् अदृष्ट्वा तस्याः प्रतिमा निर्मातव्या' इति शशिधरवर्मा घोषितवान् यत् तदेव सर्वथा अनुचितम् । असम्भवे कार्ये शिल्पिनां योजनं विवेकिनः लक्षणं न । तथापि विरागशर्मा पितुः मार्गदर्शनं प्राप्य यक्षकन्ययोः साहाय्यं प्राप्नुवन् असम्भवं सम्भवीकृतवान् । किन्तु राजा विरागशर्मणः प्रयत्नस्य पृष्ठभूमिकाम् अवगन्तुं प्रयत्नम् एव न कृतवान् । एतत् एव तस्य मूर्खतां द्योतयति । प्रधानशिल्पिस्थाने विरागशर्मणः नियुक्तितः पूर्वम् एव सः आज्ञापितवान् यत् मञ्जुलायाः प्रतिमा निर्मातव्या इति । एतत् श्रुत्वा विरागशर्मा चिन्तितवान् - 'इदानीम् एव एवं चेत् प्रधानशिल्पित्वप्राप्तेः अनन्तरं न ज्ञायते, एतादृशानि कार्याणि कतिवारं करणीयानि भवेयुः इति । यक्षकन्यकयोः साहाय्यं पुनः पुनः प्राप्तुं प्रयत्नः अनुचितः, न प्राप्येत अपि तत् पौनःपुन्येन । मूर्खस्य अल्पज्ञस्य एतादृशस्य राज्ञः सेवातः अपि गुरुकुले स्थित्वा क्रियमाणा कलासेवा एव श्रेष्ठा' इति । अतः एव सः शशिधरवर्मणः राज्यम् एव परित्यक्तवान् । यदि तदीये राज्ये स्थीयेत तर्हि कदाचित् वा राजादेशबन्धः पीडायै भवेत् एव । अतः तेन विवेकपूर्णनिर्णयः कृतः । वस्तुतः अविवेकिता अस्ति न विरागशर्मणि, अपि तु शशिधरवर्मणि'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



## एतन्मासे जातः महापुरुषः

# राष्ट्रर्षिः बङ्किमचन्द्रः

'वन्दे मातरम्'

स्वातन्त्र्यसङ्ग्रामकाले विंशतितम-शतकस्य प्रथमे दशके सर्वेषु भारतीयेषु देशभक्तिं विशेषतः जागरयति स्म एतत् गीतम् । अत्र प्रस्तुता माता भारतमाता एव ।

स्वातन्त्र्यसङ्ग्रामकाले लक्षशः देशभक्ताः आङ्ग्लशासनं विरुध्य प्राणापायम् अपि अविगणय्य देशसेवाकार्ये आत्मानं योजितवन्तः । केचन क्रान्तिवीराः हसन्तः बलिपीठम् आरूढवन्तः । तेषां सर्वेषां समानः मन्त्रः आसीत् 'वन्दे मातरम् ।'



एवम् अतिविशिष्टस्य एतस्य गीतस्य रचयिता बङ्किमचन्द्रचट्टोपाध्यायः । 'आनन्दमठ'नामकस्य कथा-ग्रन्थस्य अङ्गतया तेन एतत् लिखितम् । ईष्ट्-इण्डिया-संस्थायाः निर्दयशासनं विरुध्य केचन स्वातन्त्र्यसम्पादनक्षेत्रे यत् कार्यं कृतवन्तः तदेव एतस्य ग्रन्थस्य कथावस्तु । किन्तु अत्र ग्रन्थे एतस्मिन् कार्ये ये उद्यताः ते न सामान्याः, अपि तु संन्यासिनः । 'ये शक्तिमतां विदेशीयानां शासनं विरुध्य कार्यं कुर्वन्ति ते निस्स्वार्थाः, पवित्रात्मानः च स्युः । ये मातुः काल्याः सेवायाम् आसक्ताः ते भारतमातुः सेवायाम् अपि आसक्ताः स्युः एव' इति बङ्किमचन्द्रस्य आशयः आसीत् । एतदर्थं सः उदात्त-भावाभिव्यञ्जिन्या उत्स्फूर्तभाषोपेतया शैल्या 'वन्दे मातरम्'गीतं रचितवान् ।

सः १९३७ तमे वर्षे जून्मासस्य २७ तमे दिनाङ्के बङ्गालराज्ये जन्म प्राप्तवान् । कलकत्ताविश्वविद्यालयस्य आद्यपदवीधरयोः अन्यतमः अस्ति सः । सः न्यायाधीशः अपि आसीत् । किन्तु तदीया ख्यातिस्तु अद्वितीय-देशभक्तत्वेन ।

आधुनिकबङ्गालसाहित्यस्य विकासार्थं तेन कृता सेवा अनल्पा । सः बङ्गाली-भाषायाः गौरवं वर्धितवान् । सः यथा गद्यलेखकः तथैव पद्यलेखकः, पत्रकारः, प्रबन्धलेखकः चापि आसीत् । तेन आङ्ग्ल-भाषया अपि कृतयः रचिताः । केचन इतिहासज्ञाः अभिप्रयन्ति यत् बङ्किम-चन्द्रेण रचितः 'राजमोहन्स् वैफ्' इत्येषः कथाग्रन्थः एव भारतीयैः आङ्ग्लभाषया रचितेषु ग्रन्थेषु आदिमः इति । अरविन्दवर्यः बङ्किमचन्द्रं 'राष्ट्रभावप्रेरितः भारतीयसंन्यासी' इति निर्दिशति । १८९४ तमे वर्षे इहलोक-व्यापारं समापितवान् बङ्किमचन्द्रः । नमः कवये ऋषये राष्ट्रभक्ताय बङ्किमचन्द्राय !



# अग्निं प्राप्तुम्....

शैत्यकालः । रात्रौ तु शैत्यबाधा वर्धते स्म । अतः जनाः अन्धकारप्रसार-समनन्तरम् एव भोजनं समाप्य शीघ्रं निद्रां कुर्वन्ति स्म । रात्रेः प्रथमयामसमाप्तिसमये एव समग्रे ग्रामे निश्शब्दता प्रसृता भवति स्म । एतां निश्शब्दतां भेदयन् तदा तदा यामिकस्य ध्वनिः श्रूयते स्म - 'सावधानाः, सावधानाः' इति ।

भूस्वामी अधीनकृषिकाणां विवादस्य परिहारार्थं बहुभ्यः दिनेभ्यः कार्यालये एव वसति स्म । अतः यामिकः स्वकार्ये विशेषावधानं निहितवान् आसीत् । अद्य मध्यरात्रस्य समाप्तितः पूर्वम् एव सः चतुर्वारं ग्रामप्रदक्षिणं कृतवान् आसीत् ।

माघमासीयं शैत्यं तं नितरां बाधते स्म । शैत्यबाधातः अङ्गुल्यः क्रियाहीनाः जाताः आसन् । 'यदि सकृत् धूमपानं क्रियते तर्हि अल्पः उत्साहः प्राप्यते' इति चिन्तितवान् यामिकः ।

सः अग्निं प्राप्तुं समीपस्थं गृहं गत्वा द्वारताडनशब्दं कृतवान् ।

''कः तत्र ? किम् आवश्यकम् ?'' इति पृच्छन्ती निद्राम् अनुभवन्ती एव द्वारम् उद्घाटितवती काचित् वृद्धा ।

''अहं यामिकः अस्मि अम्ब ! यदि चुल्यां ज्वलन् कोऽपि अङ्गारखण्डः स्यात् तर्हि दीयताम् अम्ब ! धूमवर्तिका ज्वालनीया अस्ति । महत् शैत्यम् । सोढुम् एव न शक्यते'' इति उक्तवान् यामिकः मुखावरणरूपं वस्त्रं निवारयन् ।

''वत्स ! केभ्यश्चित् दिनेभ्यः मया चुल्ली एव न ज्वालिता । एषु दिनेषु भूस्वामी कार्यालये एव निवसति खलु ? कार्यार्थं गता अहं मध्याह्नभोजनं तत्रैव प्राप्नोमि । रात्रौ देवालयस्य प्रसादः उदरं पूरयति'' इति उक्त्वा द्वारं पिहितवती वृद्धा ।

यामिकः पार्श्वस्थं गृहं गत्वा द्वारशब्दं कृतवान् । द्वारम् उद्घाटितवन्तं कञ्चित् तरुणम् उक्तवान् च - ''मित्र ! गृहे ज्वलन् अङ्गारखण्डः अग्निशलाका वा यदि स्यात् तर्हि दीयताम् ।

धूमवर्तिका ज्वालनीया अस्ति । महत् शैत्यं बाधते'' इति ।

''अग्निपेटिका तु नास्ति । पार्श्वगृहात् अग्निम् आनीय पाकं कृत्वा अग्निं जलसेचनेन पूर्णतः निर्वापितवती अस्ति मम पत्नी'' इति वदन् जृम्भणं कुर्वन् द्वारं पिहितवान् सः तरुणः ।

`'अयं वराकः भूस्वामी कार्यालये यदि वासं न कृतवान् स्यात् तर्हि मया एतादृशं कष्टम् अनुभोक्तव्यं न अभविष्यत्' इति स्वगतं वदन् यामिकः 'सावधानाः, सावधानाः' इति उच्चैः वदन् ततः निर्गतवान् ।

ततः भूस्वामिकार्यालयम् उद्दिश्य गतवान् सः । तत्र भूस्वामिसहायकः लिपिकारैः सह वार्तालापं कुर्वन् आसीत् । सः यामिकं दृष्ट्वा सन्तोषं प्रदर्शयन् अवदत् - ''साधु ! योग्यक्रमेण कर्तव्यं निरुह्यमाणम् अस्ति भवता । मध्यरात्रे अतीते अपि कार्यनिरतः अस्ति भवान् श्रद्धया'' इति ।

यामिकः दण्डं नेयदीपं च भूमौ स्थापयित्वा हस्तौ योजयित्वा नमस्कुर्वन् अवदत् - ''भवतः सेवकः अस्मि श्रीमन् ! भवत्कृपया विना लोपं कर्तव्यं निर्वहन् अस्मि महोदय !'' इति ।

''किन्तु किमर्थम् अत्र आगतं भवता ? एषः कार्यालयः तु ग्रामात् बहिः वर्तते । रक्षणं तु ग्रामपरिसरे करणीयम् । किम् अत्र आगत्य लघुनिद्रा समापनीया इति वा उद्देशः भवतः ?'' इति कोपमिश्रितस्वरेण अपृच्छत् सः अधिकारी ।

''नास्ति श्रीमन् ! सर्वथा नास्ति । निद्राचिन्ता नास्ति एव मम । कार्यकाले निद्राचिन्ता कथं वा सम्भवेत् ? ग्रामपरिसरे रक्षणम् एव मम कार्यम् । तत् तु श्रद्धया कुर्वन् अस्मि श्रीमन् !'' इति विनयेन अवदत् यामिकः ।

सः पुनरपि अवदत् - ''महत् शैत्यं बाधते खलु श्रीमन् ! अतः धूमपानस्य इच्छा उत्पन्ना । अत्र कुत्रापि अग्निः लभ्येत इति विचिन्त्य आगतम्'' इति ।

''रे, नेयदीपः अस्ति एव खलु भवतः हस्ते ? ततः धूमवर्तिकां ज्वालयितुं किं न शक्यते ?'' इति हसन् पृष्टवान् अधिकारी ।

एतत् श्रुत्वा आश्चर्यभावं प्रकाशयन् यामिकः - ''सत्यं खलु ? भवता युक्तम् एव उक्तम् । मूर्खस्य मम बुद्धिः, न जाने, कुत्र गता आसीत् इति । अङ्कस्थः शिशुः सर्वत्र अन्विष्टः इव मया । धिक् माम् । धिक् माम्'' इति वदन् दण्डं नेयदीपं च गृहीत्वा ततः निर्गतवान् ।

'सावधानाः, सावधानाः' इति पुनरपि अश्रूयत यामिकस्य वचनम् । एतत् श्रुत्वा यामिकस्य व्यवहारं स्मरन्तौ परस्परं मुखं दृष्ट्वा हसितवन्तौ अधिकारी लिपिकारश्च ।





# सुवर्णसिंहासनम्-५

*(हैहयवंशीयः कौण्डिन्याधिपतिः सारस्वतः दक्षिणापथस्य सर्वाणि राज्यानि जित्वा विशालं साम्राज्यं स्थापितवान् । किन्तु तस्य उत्तराधिकारिणः राजानः समर्थाः न आसन् । अतः कालिन्दी, चम्पकः, कुन्दः च स्वतन्त्राः जाताः । कौण्डिन्यदेशः लघुदेशमात्रत्वेन स्थितः । चम्पकराजः अन्यराजान् उपायेन स्वपक्षीयान् कृत्वा कौण्डिन्यदेशम् आक्रान्तुं योजनां कृतवान् । एतत् गुप्तचरद्वारा ज्ञातवान् कौण्डिन्याधिपतिः श्रीदत्तः गुरुकुलस्थं पुत्रं विजयदत्तम् आनाय्य परिस्थितिं विवृतवान् । श्रीदत्तः कुलगुरोः आदेशानुसारं कृतात् खननात् प्राप्ते सुवर्णसिंहासने पुत्रम् उपवेश्य राज्याभिषेकं निर्वर्तयितुं सन्नाहं कृतवान् । विजयदत्तः यदा सिंहासनम् आरोढुम् उद्युक्तः तदा गम्भीरः ध्वनिः श्रुतः – 'अलम् आरोहणेन' इति । तदनन्तरम् ......)*

अकस्मात् श्रुतात् ध्वनितः आश्चर्यचकितः विजयदत्तः एकं पदं पृष्ठतः स्थापितवान् । वेदपाठकाः स्तब्धाः अभवन् । वाद्यवादकाः अपि तथैव । सभासदः सर्वे आश्चर्यचकिताः । समग्रे सभाभवने नीरवता प्रसृता । सः ध्वनिः कुतः आगतः इति केनापि झटिति न अवगतम् ।

राजगुरुः शिवानन्दवर्यः अपि अकस्मात् उत्पन्नम् एतं विघ्नं दृष्ट्वा आश्चर्यचकितः । सः विजयदत्तस्य जन्मकुण्डलीम् आमूलाग्रं परिशील्य सद्ग्रहाणां प्रभावं निश्चित्य विघ्नकारकग्रहाणां पीडां परिहृत्य मुहूर्तं निश्चितवान् आसीत् । सः ग्रहगतिं स्पष्टतया ज्ञातुं शक्तः आसीत्, न तु रहस्यमयसिंहासनस्य मान्त्रिकप्रक्रियाम् ।

सः स्वयं महामन्त्रवेत्ता अपि आसीत् इत्यतः एतावत् तु जानाति स्म यत् सिद्धपुरुषेण केनचित् मान्त्रिकेण निर्मितस्य एतस्य सिंहासनस्य एकैकम् अपि अङ्गं रहस्यमयम् इति । 'कोऽपि अनर्हः अनधिकारी अपवित्रः राजा एतत् सिंहासनम् आरोढुं न अर्हति । योग्यः उत्तराधिकारी एव एतस्य आरोहणार्थम् अर्हः' इति सः अवगतवान् आसीत् ।

स्वमन्त्रशक्त्या सः सिंहासनस्य रहस्यम्



अवगन्तुम् असमर्थः एव आसीत् । अतः अन्ये इव सः अपि मूकदर्शकः एव जातः । यदा विजयदत्तः मार्गदर्शनप्राप्तीच्छया तं दृष्टवान् तदा सः मौनम् आश्रयन् स्वस्य असमर्थतां प्रकाशितवान् । तस्य मौनम् एवं वदति स्म - 'भोः, विजयदत्त ! एतस्मिन् अवसरे भवान् एव धीरोदात्तः नायकः । सिंहासनारोहणे भवता विजयः यदि प्राप्येत तर्हि रणरङ्गे अपि जयः निश्चितः । अतः अन्तःप्रेरणा यत् सूचयति तदनुगुणं करोतु भवान्' इति ।

राजगुरुतः कोऽपि सङ्केतः आदेशः वा यदा न प्राप्तः तदा विजयदत्तः गम्भीरस्वरेण अपृच्छत् - ''भोः, कः भवान् ? शुभे मुहूर्ते देवसाक्षितया प्रवर्तमाने एतस्मिन् समारोहे किमर्थं विघ्नः उत्पाद्यते ?'' इति ।

तत्र उपस्थिताः सर्वे एतस्य प्रश्नस्य कीदृशम् उत्तरं प्राप्येत इति सकुतूहलं पश्यन्तः स्थितवन्तः । तदा प्रेममाधुर्यपूर्णा अशरीर-वाणी काचित् श्रुता - ''विजयदत्त ! भवतः पुरतः स्थितस्य सिंहासनस्य प्रथमसोपानस्य वामभागे प्रतिमारूपेण स्तिथा सालभञ्जिका अस्मि अहम् । अहम् एव एतत् सिंहासनम् आरोहन्तं भवन्तं स्ववचनेन निवारितवती'' इति ।

विजयदत्तः स्वस्य औद्धत्यपूर्णव्यवहारस्य निमित्तं लज्जाम् अनुभवन् - ''अये मातृ-शक्तिमयि ! उच्चस्वरेण प्रश्नं पृच्छता मया यत् औद्धत्यं प्रदर्शितं तदर्थं क्षमां याचे । दिव्यसिंहासनस्य शिखरभागे स्थितं कुलदेवी-विग्रहं दृष्ट्वा अहं सिंहासनारोहणसाहसं कृतवान् । एतत् सुवर्णसिंहासनम् अस्मद्वंशस्य एव इति निश्चित्य मया कार्ये प्रवृत्तम् । किन्तु अत्रान्तरे भवत्या विघ्नः उत्पादितः । एतत् दृष्टवतः मम मनसि इदानीं बहवः सन्देहाः । यद्यपि अहम् एतस्य रक्षकं सर्पराजं जित्वा तं कण्ठहाररूपेण कण्ठे धृतवान् अस्मि तथापि इदानीं भवत्याः व्यवहारतः मां शङ्का बाधते यत् एतत् सिंहासनम् अस्मद्वंशस्य न स्यात् वा इति । यदि एतत् अस्मद्वंशस्य एव, तर्हि किमर्थं वा भवत्या अहं निवारितः ? कृपया मम एतां शङ्कां निवारयतु भवती'' इति निवेदितवान् ।

तदा सालभञ्जिका प्रेमपूर्णस्वरेण उक्तवती - ''पुत्र ! विजयदत्त ! भवतः विनम्रव्यवहारेण अहं नितरां सन्तुष्टा अस्मि । यदुद्देशेन एतस्य

सिंहासनस्य निर्माणं जातं तं भवान् सफलीकरिष्यति इत्यत्र मम पूर्णः विश्वासः अस्ति । शतशः वर्षाणि भूगर्भे स्थितम् एतत् सिंहासनम् भवद्वंशस्य एव स्वम् । पूर्वं भवतः वंशे सारस्वतः नाम चक्रवर्ती आसीत् । सः विशालं साम्राज्यं प्रतिष्ठापितवान् आसीत् । अनपत्यः सः भ्रातुः पुत्रं हयग्रीवं सिंहासने स्थापितवान् । हयग्रीवः स्वस्य असामर्थ्यस्य कारणतः सर्वत्र अपमानितः भवति स्म । एतत्कारणतः तदीयः मन्त्री पुलिन्दभट्टारकः नितरां चिन्ताक्रान्तः जातः ।''

''पुलिन्दभट्टारकः समर्थः महामन्त्री । सः हयग्रीवं पुत्रवत् प्रीत्या पश्यति स्म । सः हयग्रीवं समर्थं कर्तुं बहुविधान् प्रयासान् कृतवान् । किन्तु तेन साफल्यं न प्राप्तम् । सः एव एतत् सिंहासनम् निर्मापितवान् । विश्वासार्हाणां स्वर्णकाराणां कृते सुवर्णमणिमुक्तादीन् दत्त्वा एतत् सिंहासनं निर्मापितवान् सः । किन्तु राजा हयग्रीवः एतत् न जानाति स्म ।''

''एतस्य निर्माणस्य अनन्तरं पुलिन्दभट्टारकवर्यः उच्चस्तरीयायाः मन्त्रशक्तेः साहाय्येन महाशक्तित्रयम् एतस्मिन् आवाहितवान् । वामतः त्रिषु सोपानेषु सालभञ्जिकात्रयं सृष्टवान् सः । यद्यपि वयं तिस्रः सालभञ्जिकाः अचेतनप्रतिमाः इव दृश्यमानाः स्मः, तथापि वयं न अचेतनाः, अपि तु सचेतनाः । मयि सत्यशक्तिः अस्ति । द्वितीयसालभञ्जिकायां धर्मशक्तिः, तृतीयायां न्यायशक्तिः च अस्ति । वयं सूक्ष्मरूपेण अत्र वसामः ।''



''राजधर्मः नितरां सूक्ष्मः । यः सत्यं, धर्मं, न्यायं च सम्यक् अवगत्य तदनुगुणं व्यवहारं करोति सः एव समर्थः राजा भवति । राज्यव्यवस्था भवनरूपेण चिन्तिता चेत् सत्यधर्मन्यायाः तस्य त्रयः स्तम्भाः । चतुर्थः स्तम्भः उत्तमः राजा । यदि चतुर्थः स्तम्भः दुर्बलः भवति तर्हि अन्ये त्रयः स्तम्भाः अपि शक्तिहीनाः एव । चतुर्थस्तम्भस्य अभावे राज्यव्यवस्थाभवनम् उध्वस्तं भवेत् एव । यः प्रजाः पुत्रवत् पालयति, यश्च व्यक्तिगतस्वार्थभावनां पूर्णतः परित्यज्य त्यागैकरतः भवति, यस्य च हृदयं सागरवत् विशालं भवति, यस्य च विचारः आकाशचुम्बी भवति, यः चरित्रवान् भवति, सः एव सत्यधर्मन्यायान् पालयितुम् अर्हति ।''



''महाराजः सारस्वतः राजधर्मस्य सूक्ष्मान् स्थूलान् च अंशान् अवगतवान् आसीत् । किन्तु हयग्रीवः राजधर्मस्य स्थूलांशमात्रम् अवगतवान् आसीत् । अतः तस्य साहाय्यार्थं पुलिन्दभट्टारकः सालभञ्जिकाः सृष्टवान् । अपूर्वसिंहासनस्य निर्माणस्य समाप्तेः पूर्वम् एव हयग्रीवस्य आकस्मिकं मरणं जातम् । पुलिन्दः हयग्रीवे अतिमहतीं प्रीतिं दर्शयति स्म । हयग्रीवस्य मरणात् वैराग्यं प्राप्तवान् सः संन्यासं स्वीकर्तुम् ऐच्छत् । किन्तु सः एतस्य अपूर्वस्य सिंहासनस्य निर्माणं व्यर्थीकर्तुं न इच्छति स्म । अतः एतत् सिंहासनम् अयोग्येन केनचित् यथा न प्राप्येत, योग्यः उत्तराधिकारी एव यथा प्राप्नुयात् तथा तेन व्यवस्था कृता । तदर्थं तेन मन्त्रशक्तिः अवलम्बिता ।''

''स्वमन्त्रशक्तेः आधारेण सः एकं महासर्पं निर्माय सिंहासनस्य रक्षणकार्ये नियोजितवान् । महासर्पेण पृष्टस्य प्रश्नस्य योग्यम् उत्तरं यः ददाति, यश्च धर्मसूक्ष्मादीन् जानाति, सः एव उत्तराधिकारी यथा भवेत् तथा तेन व्यवस्था कृता । उत्तराधिकारिणः योग्यतायाः पूर्णपरीक्षार्थम् अस्मान् तिस्रः सालभञ्जिकाः अपि सृष्टवान् सः ।

प्रथमपरीक्षायां भवता उत्तीर्णता प्राप्ता । तावता परीक्षा एव परिसमाप्ता इति चिन्तनीयं नास्ति । इदानीम् अस्मासु एकैका अपि एकैकां कथाम् उक्त्वा तत्सम्बद्धप्रश्नान् पृच्छति । योग्यम् उत्तरं दत्तं चेदेव भवान् सिंहासनम् आरोढुं योग्यः भविष्यति । पुलिन्दभट्टारकः अन्यत् एकं वस्तु - चन्द्रहास-नामकं - सृष्टवान् आसीत् मन्त्रशक्त्या । समुचितोत्तरदानेन भवान् तस्यापि स्वामी भवितुम् अर्हति । यदि भवान् अस्मासु कयाचित् वा पृष्टस्य प्रश्नस्य समुचितम् उत्तरं दातुम् असमर्थः भवति तर्हि एतत् सिंहासनम् अदृश्यं भविष्यति । भवतः कण्ठे स्थिता श्वेतकान्तिमती माला चापि तथैव । तदनन्तरं वयं पूर्वतनस्थितिं प्राप्स्यामः'' इति ।

तत्र उपस्थिताः सर्वे सालभञ्जिकया कथितं श्रुतवन्तः आसन् ।

महाराजः श्रीदत्तः, यश्च अद्यावधि पुत्रस्य विजयदत्तस्य सौभाग्यं दृष्ट्वा परमसन्तोषम् अनुभवति स्म सः, इदानीं चिन्ताक्रान्तः जातः । विविधाः शङ्काः तस्मिन् उत्पन्नाः । सिंहासनप्राप्त्या सः यावत् सन्तुष्टः आसीत्

तावत् एव दुःखितः अभवत् - एतं विघ्नं दृष्ट्वा । 'मम पुत्रः चक्रव्यूहे स्थितः अभिमन्युः इव जातः अस्ति' इति सः चिन्तयति स्म । विजयदत्तस्य पार्श्वे स्थितायाः श्रीलेखायाः मुखे कदाचित् चिन्तारेखा, पुनः कदाचित् निश्चिन्तता च दृश्यते स्म । मङ्गलकलशं धृतवान् शिवानन्दवर्यः गाम्भीर्येण स्थितः आसीत् । राजास्थाने स्थितानां सर्वेषां दर्शकानां हृदये भयं, शङ्का, आतङ्कः, कुतूहलम् इत्यादयः भावाः दृश्यन्ते स्म । एतेषां मध्ये शिला इव निश्चिन्ततया, निर्भयतया, आत्मविश्वासेन च स्थितवान् आसीत् विजयदत्तः ।

विजयदत्तः मुखं परिवृत्य पितरं श्रीदत्तं, गुरुं शिवानन्दं च चरणस्पर्शपूर्वकं नमस्कृत्य प्रथमसोपाने स्थितां सालभञ्जिकाम् उद्दिश्य अवदत् - ''हे सत्यरूपिणि अम्ब ! अहं परीक्षार्थं सिद्धः अस्मि । अहं सफलतां यथा प्राप्नुयां तथा आशीर्वादं करोतु इति प्रार्थये'' इति ।

''भोः, राजकुमार ! भवतः धीरोदात्तं व्यवहारम् अहम् अभिनन्दामि । मया कथ्यमानां कथां श्रद्धया शृणोतु तावत्'' इति उक्त्वा प्रथमसोपानस्य सालभञ्जिका कथाम् आरब्धवती -

त्रिपुरान्तकदेशं कालकेतुः नाम मूर्खः राजा पालयति स्म । शासनकार्ये सः कस्यापि साहाय्यम् अपि न इच्छति स्म । 'यः सिंहासने उपविशति तस्य हस्ते प्रबलः शासनदण्डः भवति, सः प्रत्यक्षदेवता एव' इति सः भावयति स्म ।



एवं कस्यापि मार्गदर्शनं विनैव सः राज्यपालनं करोति स्म इत्यतः तस्य निर्णयाः बहुधा असमीचीनाः भवन्ति स्म । देशस्य शासनव्यवस्था दिने दिने अधोगतिं गच्छन्ती आसीत् । शासनव्यवहारे भ्रष्टानाम् एव प्राबल्यम् आधिक्येन दृश्यते स्म । राज्ञः मिथ्याप्रशंसां कृत्वा स्वार्थसाधकाः स्वसम्पत्तिं वर्धितवन्तः । प्रजानां हितार्थं निश्चितं धनम् अधिकारिणः स्वयं स्वीकृतवन्तः । कोषः यदा रिक्तः जातः तदा राज्ञा विशेषकराः विहिताः । परिष्काराभावतः कासार-कूप-सरोवरादयः शुष्काः जाताः । जनाः जलार्थं वृष्टिमात्रावलम्बिनः जाताः ।

कलासाहित्यादिक्षेत्रेषु अपि भ्रष्टाचारः प्रसृतः । सुन्दर्यः स्त्रियः नर्तने अनिपुणाः



अपि राजास्थाने नर्तनार्थम् अवकाशं प्राप्नुवन्ति स्म । अपक्वानां निम्नस्तरीयाणां च चित्र-काव्यादीनां प्रोत्साहनम् अधिकं जातम् । योग्याः कलाकाराः साहित्यकाराः च अनादरपात्रभूताः जाताः । देशभक्ति-व्याजेन परदेशं प्रति गमनं निषेधितम् आसीत् । कवितारचनादिकं निरर्थकम् इति चिन्तयति च राजा ।

कालकेतोः एतादृशशासनं दृष्ट्वा नितरां दुःखिता अभवत् राज्ञी हेमावती । सा स्वयं कवियित्री, काव्यप्रिया, विदुषी च । राज्ञः मूर्खता असहनीया आसीत् । तथापि सा मौनम् आश्रितवती ।

राज्ञः पारिवारिकजीवनं दौर्भाग्यपूर्णम् आसीत् । पट्टमहिष्यां सन्तानः न प्राप्तः तेन । अतः सः द्वितीयवारं तृतीयवारं च विवाहितः अभवत् । तथापि तेन अपत्यं न प्राप्तम् । अतः तदीयं वैयक्तिकजीवनम् असन्तोषपूर्णम् आसीत् ।

राज्ञः अदक्षव्यवहारतः प्रजाः असन्तुष्टाः । वर्षद्वयतः महती अनावृष्टिः अपि ताः बाधते स्म । राज्ञा अन्येभ्यः देशेभ्यः धान्यानि आनायितानि । किन्तु वितरणव्यवस्था भ्रष्टतापूर्णा आसीत् इत्यतः अधिकमूल्येन तानि धान्यानि विक्रीय प्रभूतं धनं सम्पादित-वन्तः राजोद्योगिनः ।

देशे दारिद्र्यपीडा, क्षामः, अदक्षता इत्यादयः प्रवृद्धाः इत्यतः बहवः जनाः लुण्ठन-वञ्चन-चौर्यादिषु निरताः जाताः । चित्ररथनामकस्य नेतृत्वे विविधाः अपराधाः सर्वत्र प्रवृद्धाः ।

चित्ररथः भगवतः चित्ररथस्य अनुग्रहेण जन्म प्राप्तवान् आसीत् । सः शस्त्रनिपुणः शास्त्रज्ञः चापि आसीत् । तथापि सः एतादृशं निन्द्यं मार्गं कथम् आश्रितवान् इति कोऽपि न जानाति । यद्यपि सः लुण्ठनादिकं बहुधा करोति स्म, किन्तु ततः प्राप्तं धनं निर्धनेभ्यः वितरति स्म । तस्य विषये विविधाः कथाः अपि श्रूयते स्म ।

अत्रान्तरे एका विचित्रा घटना प्रवृत्ता ।

एकस्मिन् शुक्रवासरे राज्ञी हेमावती कुलपरम्परानुगुणं चित्ररथस्वामिनः पूजार्थं मन्दिरं गतवती आसीत् । ततः प्रत्यागमन-समये तस्याः दृष्टिः कस्यचित् वृद्ध-संन्यासिनः उपरि पतिता । सा तं भक्त्या नमस्कृतवती । सः संन्यासी मन्दहासं प्रकटयन्

आशीर्वादरूपेण एकं श्लोकम् उक्तवान् । श्लोकस्य तात्पर्यं तु एवम् -

''सुगन्धं प्रसारयद्भिः पुष्पैः विभूषिता लता स्वरक्षणार्थं कण्टकाकीर्णं वितानम् एव प्रीत्या अवलम्बेत् कदाचित् । किन्तु ततः लता-पुष्पाणां सौगन्ध्यप्रसारे न काऽपि हानिः । प्रत्युतः तस्याः कारणतः जनाः वितानं प्रति आकृष्टाः भवन्ति'' इति ।

एतं श्लोकं श्रुतवत्याः हेमावत्याः नेत्रे सजले जाते । भावोद्वेगं निरोद्धुम् अशक्नुवती सा अवनम्य संन्यासिनः पादौ भक्त्या स्पृष्टवती ।

राज्ञा एषा वार्ता ज्ञाता । संन्यासिनां विषये आदरः न प्रकाशनीयः इति राजाज्ञा । राज्ञी एताम् आज्ञाम् उल्लङ्घितवती इत्यतः राजा मासात्मककारागारवासं दण्डत्वेन विहितवान् । राजा संन्यासिनम् अपि बद्ध्वा आतपे स्थापितवान् । स्वयं कशया तं ताडयित्वा मूर्च्छितं कृतवान् च ।

भूतपूर्वसेनापतये देशभक्ताय श्रीमल्लाय एतादृशाः व्यवहाराः सर्वथा न अरोचन्त । सः राज्ञः अनुचितव्यवहारान् दृष्ट्वा नितरां क्रुद्धः । स्वदेशवासिनां दुरवस्थां वर्णयन् सः प्रतिवेशिराजाय चन्दनवर्मणे एकं पत्रं लिखितवान् -

''अस्माकं राज्ञः मूर्खताकारणतः देशे मानवीयगुणाः दिने दिने लुप्ताः जायमानाः सन्ति । देशे एकैकोऽपि स्वसुखार्थम् अपरं मारयितुम् अपि सिद्धः एव । सर्वे स्वार्थैक-साधनतत्पराः । एतस्य मूलकारणम् - अस्माकं राजा एव स्वार्थी । तस्य दुराचाराणां कारणतः देशे आहारस्य जलस्य च महान् अभावः परिदृश्यते । नदी-सरोवर-कासारादयः शुष्काः । द्वित्रेभ्यः वर्षेभ्यः अनावृष्टिः बाधते अत्र । जनाः वराकोदरपूरणार्थं चौर्य-लुण्ठनादिषु निमग्नाः । एषा एव स्थितिः इतोऽपि किञ्चित्कालं यदि अनुवर्तते तर्हि अस्माकं देशः नाममात्रावशिष्टः स्यात् । अस्मद्देशस्य एतां स्थितिं परिवर्तयितुं समर्थः न कोऽपि अस्ति । एकः तादृशः समर्थः आसीत् । किन्तु सः लुण्ठनवृत्त्या जीवन् कुपथगामी संवृत्तः । अहं तु वृद्धः असमर्थः च । भवान् एकः एव अस्माकं देशम् उद्धर्तुं समर्थः'' इति ।

एतत् पत्रं कपोतस्य कण्ठे बद्ध्वा चन्दनवर्मणे प्रेषितवान् सः ।



**महासंस्कृत्याः स्थूलदर्शनम्**
**प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः**

# ४. गङ्गायाः समुत्पत्तिः

रविवासरः तद्दिने इत्यतः सन्दीपचमेल्योः विद्यालयस्य विरामः । अतः पितामहात् कथां श्रोतुं सायङ्कालपर्यन्तं प्रतीक्षा करणीया न आसीत् ताभ्याम् । यावत् देवनाथवर्यस्य पत्रिकापठनं समाप्तं तावता चमेली हसन्ती आगत्य देवनाथ-वर्यस्य अङ्के उपविष्टवती । सन्दीपः अपि देवनाथवर्यस्य प्रकोष्ठम् आगत्य उपविष्टवान् । चमेल्याः इव सन्दीपस्य व्यवहारे बाल्यसहजं लौल्यं न दृश्यते स्म ।

देवनाथवर्यस्य पुत्रः कुमारः । सः कस्मिंश्चित् वाणिज्यकार्यालये कार्याधिकारी । भानुवासरमात्रे पुत्राभ्यां सह स्थातुं समयं प्राप्नोति स्म सः । सः अपि पितुः प्रकोष्ठं प्राप्य – ''भवन्तौ पितामहेन सह युद्धं कर्तुम् उपस्थितौ इति भाति'' इति पुत्रौ अवदत् मन्दहासं प्रकटयन् ।

''आं तात ! ज्ञानं स्वायत्तीकर्तुम् एतत् युद्धम्'' इति अवदत् चमेली ।

''किन्तु आवयोः ज्ञानस्वायत्तीकरणरूपात् प्रयत्नात् तातस्य ज्ञानभाण्डागारस्य न काऽपि हानिः । अतः एव अहम् अपि अत्र प्रवृत्तः'' इति अवदत् सन्दीपः ।

कुमारवर्यः बालयोः ज्ञानार्जनप्रवृत्तिं मनसा श्लाघमानः मन्दहासं प्रकटयन् देवनाथवर्यतः पत्रिकां प्राप्य ततः निर्गतवान् ।

''इदानीं वयं गङ्गां स्पृशाम । सा किमर्थं पावनत्वेन परिगण्यते इत्येतं विषयं कथयिष्यामि इति भवता उक्तम् आसीत्'' इति उक्तवती चमेली ।

देवनाथवर्यः कथानिरूपणम् आरब्धवान् –

''हिमालयः आ प्राचीनकालात् गौरवपात्रम् अस्ति लोके । केचन विश्वसन्ति यत् तत्र अगोचरशक्तीनाम् उपस्थितिः सदा भवति इति । वस्तुतः हिमालयपरिसरः एव पृथक् लोकः इव । अथवा अनेके लोकाः सन्ति तत्र ....''

''अनेके लोकाः सन्ति तत्र इत्यस्य किं तात्पर्यं तात ?'' – अपृच्छत् सन्दीपः ।

''यत् भौतिकं जगत् दृश्यते तन्मात्रस्य एव अस्तित्वं भवति इति न । अस्माभिः द्रष्टुम्



*अनुवर्तमाना कथामाला*

अशक्यस्यापि जगतः स्थितिः भवितुम् अर्हति एव । तस्य स्थित्यर्थं भौतिक-प्रदेशस्य आवश्यकता न भवति । एकस्मिन् एव देशे काले च अनेकेषां लोकानां स्थितिः भवितुम् अर्हति ।''

''दर्शनं विना तेषाम् अस्तित्वं कथं ज्ञायते तात ?'' - पृष्टवती चमेली ।

''भवती मम मनः किं द्रष्टुं शक्नोति ? स्वमनः अपि द्रष्टुं न शक्नोति भवती । तथापि मनसः अस्तित्वं तु अनुभव-गोचरं भवति एव । ऋषि-मुनयः स्वस्य अन्तर्दृष्टिद्वारा अदृश्यस्य अपि लोकस्य अनुभवं प्राप्तुम् अर्हन्ति स्म । तादृशं विशिष्टं सामर्थ्यं भवति तेषाम् ।



पूर्वं कदाचित् भगवान् नारदः पृथिवीसञ्चारं समाप्य भगवतः विष्णोः आवासभूमिं गोलोकं प्रति गच्छन् आसीत् । एवं गमनसमये तेन हिमालय-परिसरः प्राप्तः । सः भौतिकं रूपं यथा तथैव सूक्ष्मरूपाणि अपि अभिज्ञातुं शक्नोति स्म ।

नारदः वीणापाणिः सन् सर्वदा नादोपासन-मग्नः भवति इति भवन्तः जानन्ति एव खलु । सः सदा भगवतः विष्णोः कीर्तनं कुर्वन् भवति स्म । सङ्गीतप्रपञ्चे निमग्नः सः हिमालयस्य स्थूलं सूक्ष्मं च रूपं पश्यन् मन्दगत्या उपर्युपरि गच्छन् आसीत् । कौमुदीमयी रात्रिः सा । उन्नतपर्वतमये परिसरे गच्छतः तस्य दृष्टिः एकत्र संलग्ना । तत्र सः सुन्दरान् कांश्चन आकारान् दृष्टवान् ।

नारदः गानं स्थगयित्वा तेषाम् आकाराणां सुसूक्ष्मपरिशीलने उद्युक्तः अभवत् ।

सः जानाति स्म यत् अत्र दृश्यमानाः आकाराः एते अलौकिकाः इति । अलौकिक-जातयः अपि बह्व्यः सन्ति खलु ? अतः एते किञ्जातीयाः इति न अवगतं तेन । सः तेषां समीपं गत्वा तान् नमस्कृत्य पृष्टवान् - ''महात्मानः ! के भवन्तः ?'' इति ।

तदा तेषु कश्चित् अवदत् - ''वयं गन्धर्वाः । वयं रागदेवताः । रागाणाम् आत्मरूपाः'' इति ।

नारदः लक्षितवान् यत् तेषु सर्वेषु अपि याकाचित् विकृतिः अस्ति इति । केषाञ्चित् शरीरे क्षतचिह्नानि दृश्यन्ते स्म । पुनः केषाञ्चित् शरीरे कृष्णचिह्नानि आसन् । अन्येषां केषाञ्चित् शरीरं चर्मरोगग्रस्तम् आसीत् ।

एतत् दृष्ट्वा नारदः आश्चर्येण पृष्टवान् - ''किमर्थं भवन्तः क्षतग्रस्ताः, रोगग्रस्ताश्च इव लक्ष्यन्ते ?'' इति ।

तदा तेषु गन्धर्वेषु अन्यतमः अवदत् - ''यदा गायकः अहङ्कारेण व्यवहरन् रागेषु प्रीतिम् अप्रदर्शयन् स्वच्छन्दतया गायन् दोषान् करोति, यदा च वाद्यवादकाः शास्त्रशुद्धिम् अपालयन्तः दोषपूर्णतया वाद्यानि वादयन्ति, तदा तत्तद्राग-सम्बन्धिनः गन्धर्वस्य आघातः भवति । तस्य शरीरे काऽपि विकृतिः उत्पद्यते । आ बहोः कालात् एवम् एव अनुवर्तमानम् अस्ति'' इति ।

गन्धर्वाणाम् एतादृशीं गतिं दृष्ट्वा नारदः नितरां खिन्नः । 'प्रमादवशात् दोषं कुर्वन् अहम् अपि एतेषु कस्यचित् विकृतेः कारणम् अपि स्याम्' इति चिन्तयन् सः लज्जितः अपि ।

क्षणकालं विचिन्त्य सः अपृच्छत् - ''मान्यवराः गन्धर्वश्रेष्ठाः, एतासां विकृतीनां



निवारणार्थं किं कोऽपि उपायः नास्ति ?'' इति ।

''कुतो न स्यात् ? अस्ति एव । यदि वयं परिपूर्णं निर्दुष्टं सङ्गीतं श्रोतुम् अवकाशं प्राप्नुयाम तर्हि अस्माकं क्षतिग्रस्तानि अङ्गानि दोषरहितानि भविष्यन्ति'' इति उक्तवन्तः गन्धर्वाः ।

''परिपूर्णं सङ्गीतं श्रावयितुं को वा समर्थः ? किम् एतद्विषये किमपि जानन्ति भवन्तः ?'' इति अपृच्छत् नारदः ।

''भगवान् शिवः एव परिपूर्णः गायकः । किन्तु सः अस्मन्निमित्तं किमर्थं वा गायेत् ? अतः उपायं जानन्तः अपि वयं लाभं प्राप्तुं न शक्तवन्तः'' इति खेदेन अवदन् गन्धर्वाः ।

''मान्याः, अलं निराशया । भगवतः शिवस्य करुणा अपारा । सः यथा गायेत् तथा अहं कमपि उपायं करिष्यामि'' इति उक्त्वा ततः निर्गतवान् नारदः ।

गानार्थं विशेषानुरोधः करणीयः न अभवत् नारदेन । यतः शिवः प्रार्थनाश्रवणमात्रेण एव गानार्थं सिद्धः जातः । किन्तु सः अवदत् - ''श्रोतृषु एकः वा परिपूर्णश्रोता अस्ति चेदेव अहं गातुं शक्नोमि, न अन्यथा'' इति ।

''परिपूर्णश्रोता कः अस्ति लोके ?'' - नारदः अपृच्छत् ।

''परिपूर्णश्रोतारौ उभौ स्तः । तौ च - ब्रह्मा विष्णुः च'' - भगवान् शिवः अवदत् ।

नारदः ब्रह्मविष्ण्वोः समीपं गत्वा प्रार्थनां कृतवान् । तौ तु सन्तोषेण सङ्गीतश्रवणार्थं सिद्धौ जातौ । विरललभ्यं शिवसङ्गीतश्रवणभाग्यं को वा निराकुर्यात् ?

एतदनन्तरं सङ्गीतकार्यक्रमस्य दिनं निश्चितम् । शिवस्य निवासस्थले कैलासे एव कार्यक्रमः व्यवस्थापितः । ब्रह्मा विष्णुः च कैलासम् आगतौ । गन्धर्वाः च उपस्थिताः । शिवः गानम् आरब्धवान् । कैलासपरिसरः नादमयः जातः । सर्वे देवाः देवताश्च विना शब्दम् आगत्य स्थितवन्तः । शिवः गायन् गानसमाधौ लीनः जातः । गान्धर्वाणां शरीरे उत्पन्नाः विकाराः क्रमशः अपगताः ।

भगवान् विष्णुः अपि सङ्गीतश्रवणे पूर्णतः निमग्नः जातः । अत्रान्तरे एका विलक्षणघटना घटिता । विष्णोः शरीरात् एकं प्रकाशमण्डलं द्रवीभूय प्रवाहरूपेण अग्रे अगच्छत् ।

ब्रह्मा एतत् दृष्टवान् । सः विष्णोः प्रवाहरूपं प्रकाशमण्डलं स्वकमण्डलौ सङ्गृहीतवान् । एषा घटना तदवसरे केनापि न ज्ञाता । सङ्गीतकार्यक्रमः समाप्तः । अनन्तरकाले ब्रह्मणा कमण्डलुतः उन्मोचितं प्रकाशमण्डलं नदीरूपेण स्वलोके

प्रावहत् । तदनन्तरं भगीरथः तां भूलोकम् आनीतवान् ।

हस्तेन दिनपत्रिकां गृहीत्वा द्वारसमीपे स्थितः कुमारवर्यः अवदत् – ''आश्चर्यकरम् एतत् ! तात ! भवता यदा कथाकथनम् आरब्धं तदा मया अपि पत्रिकापठनं परित्यज्य द्वारसमीपे स्थितम् । 'उपवेष्टव्यम्' इत्यपि मया विस्मृतम् । गङ्गासम्बन्धे एतादृशी काचित् रोचिका कथा स्यात् इति मया न ऊहितम् आसीत् अपि'' इति ।

तदा देवनाथवर्यः अवदत् – ''वत्स ! भवान् यदा बालः आसीत् तदा अहं शोधकार्यादिषु नितरां निमग्नः भवामि स्म । अतः कथां श्रावयितुं समयम् एव न प्राप्नोमि स्म । तद्विषये महान् खेदः अस्ति मम । तस्य प्रायश्चित्तरूपेण एव भवत्पुत्रौ कथां श्रावयन् अस्मि इदानीम्'' इति ।

''न हि, न हि । तात ! कथाश्रावणं प्रायश्चित्त-रूपेण न । अस्मासु स्थितेन वात्सल्येन भवान् कथां श्रावयति । एवं ननु ?'' – अपृच्छत् चमेली ।

''आस्तां तावत् सा चर्चा । कथाश्रावणोद्देशः यः कोऽपि भवेत् नाम, फलं तु समानम् । अतः तां चर्चां स्थगयाम'' इति अवदत् देवनाथः ।

''तात ! गङ्गायाः एषा कथा प्रतीकात्मिका अस्ति इति भाति मम । युक्तं किल एतत् ?'' कुमारवर्यः अपृच्छत् ।

''युक्तम् उक्तं भवता । विविधानि प्रतीक-तत्त्वानि निहितानि सन्ति अत्र । भगवान् शिवः सर्वासां कलानां सङ्गीतनृत्यादीनां च अधिदेवता इति भाव्यते । सङ्गीतं तस्मिन् परिशुद्धरूपेण निवसति । विश्वे अभिव्याप्ताम् आन्तरङ्गिकीं समस्वरताम् अभिव्यञ्जयति सङ्गीतम् । सा च समस्वरता विषमरसतां विनाशयति । अतः एव गन्धर्वाः पुनः पूर्वतनं निरामयरूपं प्राप्तवन्तः ।''

''सङ्गीतशक्तेः अपूर्वं सामर्थ्यं चित्रितम् अस्ति अत्र ।''

''आम् । परिपूर्णः श्रोता सङ्गीतेन अभेदभावं प्राप्तुम् अपि शक्नोति । अतः तदवसरे तदीयं मनः सङ्गीततरङ्गाः इव तरङ्गयुक्ततां प्राप्तुम् अपि अर्हति । भगवान् विष्णुः तु अमर्त्यः । अतः गङ्गारूपेण तस्मात् निर्गतं तदीयं प्रकाशमण्डलं यदि मृतान् अपि उज्जीवयेत् तर्हि तत्र न किमपि आश्चर्यम् ।''

अत्रान्तरे देवनाथस्य स्नुषा स्मारितवती यत् अल्पाहारः सिद्धः अस्ति इति । अतः सर्वे उत्थाय पाकशालां गतवन्तः ।



# मशकपीडानिवारकं तायकम्

कस्यचित् कार्यस्य निमित्तं कोदण्डः नगरं गतवान् । राजमार्गस्य पार्श्वे वृक्षस्य अधः जनानां सम्मर्दः तेन दृष्टः । सः कुतूहलेन जनसमूहसमीपं गतवान् । तत्र तेन वृक्षस्य अधः व्याघ्रचर्मणः उपरि उपविष्टः दीर्घश्मश्रुधारी कश्चन संन्यासी दृष्टः । सः ललाटे कुङ्कुमं धृत्वा कण्ठे स्थूलरुद्राक्षमालां धृतवान् आसीत् ।

समूहस्थाः जनाः परस्परं वदन्ति स्म - ''एषः मन्त्रवेत्ता एकम् अपूर्वं तायकं ददाति । तद्बलात् सर्वविधसमस्याः अपि परिहृताः भवन्ति । दिनद्वयतः एषः अत्र अस्ति । विन्ध्याचले स्थितस्य जीर्णमन्दिरस्य उद्धारार्थम् एव सः पञ्चभिः रूप्यकैः तायकस्य विक्रयणं कुर्वन् अस्ति'' इति ।

कोदण्डः गृहस्य पृष्ठभागे एकं कूपं खानितवान् आसीत् । महान् व्ययः कृतः आसीत् तेन । तथापि जलं तु न प्राप्तम् एव । ''एतां समस्याम् एषः सिद्धपुरुषः परिहरेत् अपि'' इति विचिन्त्य सः संन्यासिनः समीपं गतवान् ।

तावता वेगेन आगतः कश्चन वृद्धः जनान् निवारयन् संन्यासिनः समीपम् आगत्य - ''भवता तायकं दत्त्वा उक्तम् आसीत् यत् एतत् प्रकोष्ठे स्थापितं चेत् मशकबाधा न भविष्यति एव इति । ह्यः रात्रौ मया तथैव कृतम् । किन्तु प्रकोष्ठे मशकानाम् एव साम्राज्यम् आसीत् । क्षणमात्रम् अपि मया निद्रा न प्राप्ता । भवतः तायकः निष्प्रयोजकः संवृत्तः'' इति ।

तदा संन्यासी शान्तस्वरेण अवदत् - ''मया यथा उक्तं तथा न कृतं भवता । मशकजालस्य अन्तः तत् स्थापयित्वा भवता शयनं कृतं यदि स्यात् तर्हि एकोऽपि मशकः भवन्तं न अपीडयिष्यत्'' इति ।





# अपकारः अपि उपकाराय

पूर्वं देवगिरिनामकं राज्यं हेमशङ्करः नाम राजा पालयति स्म । सः समर्थः शासकः आसीत् । बह्वीषु कलासु निष्णातः आसीत् । अतः श्रेष्ठकलाकाराणां संरक्षकः अपि आसीत् सः । अतः एव तदीया कलापोषण-कीर्तिः सर्वेषु देशेषु प्रसृता आसीत् ।

राजा प्रतिवर्षं राज्ञ्या सह गत्वा कस्मिंश्चित् सुन्दरे प्राकृतिकपरिसरे कानिचन दिनानि वसति स्म । ततः नवोल्लासं प्राप्य प्रत्यागत्य यथापूर्वं राजकार्येषु निरतः भवति स्म ।

एकदा सः एतादृशविहारार्थं शरदृतौ अरुणाचलप्रदेशं गतवान् । पर्वतप्रदेशे तस्मिन् अपूर्वं सौन्दर्यं निहितम् आसीत् । आकाश-चुम्बिनः उन्नताः वृक्षाः मन्दमारुतकारणतः शिरः कम्पयन्तः इव दृश्यन्ते स्म । विविध-वर्णीयानि पुष्पाणि तत्र तत्र इन्द्रधनुः सृजन्ति स्म इव । तत्रत्याः पक्षिणः स्वच्छन्दविहारेण परिसरशोभां वर्धयन्ति स्म । राजा हेमशङ्करः एतत् अपूर्वं सौन्दर्यं दृष्ट्वा सकृत् चिन्तितवान् यत् अत्रैव सदा वासः करणीयः इति । किन्तु राजकार्यं तम् आह्वयति स्म । अतः सः राजधानीं प्रतिगतवान् ।

राजास्थाने स्थितस्य चपलशर्मणः सूचनायाः अनुगुणम् एव राजा अरुणाचल-प्रदेशं गतवान् आसीत् । अतः ततः प्रत्यागतः राजा चपलशर्मणे शतं सुवर्णनाणकानि पुरस्काररूपेण दत्तवान् ।

चपलशर्मा चतुरोक्तिपटुः आसीत् । अतः एव तस्मिन् विशेषादरः आसीत् महाराजस्य । चपलशर्मा अरुणाचलप्रदेशीयः । उद्योगम् अन्विष्य आगतः सः देवगिरिराजास्थाने आश्रयं प्राप्तवान् आसीत् । जन्मभूमेः विषये तस्य विशेषादरः आसीत् । 'राजा अपि मम जन्मभूमेः सौन्दर्यस्य आस्वादनं करोतु' इति उद्देशेन सः राजानम् अरुणाचलदर्शनार्थं प्रेरितवान् आसीत् ।

राजा तु अरुणाचलप्रदेशस्य सौन्दर्येण वशीकृतः आसीत् । अतः सः एकैकस्यापि पुरतः तत्प्रदेशीयं सौन्दर्यातिशयम् उपवर्णयति स्म । अतः बहवः तत्र गत्वा तस्य प्रदेशस्य




सौन्दर्यम् आस्वाद्य आगताः ।

अरुणाचलप्रदेशस्य विषये वार्तालापं कुर्वन् कदाचित् चपलशर्मा अवदत् - ''तस्य प्रदेशस्य सौन्दर्यस्य दर्शनमात्रेण कविता-स्फूर्तिः उद्गच्छति'' इति ।

तदा राजा अवदत् - ''युक्तम् एव उक्तं भवता । अरुणाचलस्य दर्शनात् उद्गताः भावाः मया लिखिताः । तत् पठित्वा राज्ञी उक्तवती यत् उत्कृष्टकविता अस्ति एषा इति । तया अपि तत्रत्यरम्यताम् अधिकृत्य काश्चन कविताः लिखिताः'' इति ।

''महाराज ! भवान् जन्मना कविः । अपूर्वसौन्दर्यस्य दर्शनस्य अनन्तरं कस्य वा कवेः काव्यरचनास्फूर्तिः न उद्गच्छेत् ? अकवौ अपि सा स्फूर्तिः उद्गच्छेत् एव । भवान् तु श्रेष्ठः कविः । यथा भवति, तथा अन्येषु अपि तत्रत्यसौन्दर्यस्य दर्शनात् काव्यरसः उद्गतः स्यात् एव । अतः अरुणाचलम् अधिकृत्य एकां काव्यगोष्ठीम् आयोज्य श्रेष्ठः कविः कुतो वा न पुरस्करणीयः भवता ?'' इति असूचयत् चपलशर्मा ।

वस्तुतः चपलशर्मणि अपि काव्यरचना-प्रवृत्तिः आसीत् । 'यदि एतादृशी गोष्ठी प्रवर्तेत तर्हि तस्याम् अहं मम कवितां श्रावयित्वा श्रेष्ठकवित्वेन पुरस्कृतः भवेयम्' इति इच्छा तस्मिन् सुप्तरूपेण आसीत् । अतः एव काव्यगोष्ठ्याः आयोजनस्य प्रस्तावः उपस्थापितः आसीत् तेन ।

चपलशर्मा कदाचित् स्वकविताम् आस्थानकवये चतुरमतये दर्शितवान् आसीत् । ताः पठित्वा चतुरमतिः उक्तवान् आसीत् - ''भवतः कवितासु काव्यगुणाः विरलाः । एतादृशीः कविताः श्रुत्वा जनाः भवतः उपहासं कुर्युः । इदानीं राज्ञः अनुग्रहः भवति अस्ति । चतुरोक्तिकारणतः जनाः अपि भवति आदरं प्रकटयन्ति । यदि ते भवतः काव्यं शृणुयुः तर्हि भवति स्थितः आदरः न्यूनः भवेत्'' इति ।

एतत् असूयाजनितं वचनम् इति भावितवान् चपलशर्मा । 'मदीयं काव्यं उच्चस्तरीयम् एव' इति दृढतया भावयति स्म सः । अतः सः स्वकविताश्रावणार्थम् अवकाशं प्रतीक्षमाणः आसीत् ।

अरुणाचलं दृष्ट्वा आगतवतां कृते काव्य-गोष्ठी आयोजिता । 'तस्यां नवकवयः एव भागं ग्रहीतुम् अर्हन्ति, न तु प्राचीनकवयः'

इति नियमः कृतः आसीत् । 'यस्य काव्यं श्रेष्ठं भवति तस्मै सहस्त्रं सुवर्णनाणकानि दीयन्ते' इति राज्ञा उद्घोषितम् आसीत् ।

प्राचीनकविभिः सह स्पर्धा करणीया नास्ति इत्यतः नवककवयः बहवः एतस्यां काव्यगोष्ठ्यां सोत्साहं भागं गृहीतवन्तः । श्रोतारः अपि नवककवीनां काव्यस्य श्रवणे उत्साहं दर्शितवन्तः ।

राजा आस्थानकविं चतुरमतिं निर्णायकं कृतवान् । तदा चपलशर्मा राजानम् उद्दिश्य अवदत् - ''चतुरमतिः प्राचीनः कविः, महापण्डितः, उन्नतस्तरीयश्च । नवककवीनां रुचिः विषयादयः च कदाचित् चतुरमतिवर्याय न रोचेरन् । भवान् तु स्वयं कविः अस्ति । अरुणाचलस्य सौन्दर्यं स्वयं दृष्टम् अपि अस्ति भवता । अतः श्रेष्ठकवेः चयनं भवता एव क्रियते चेत् वरम्'' इति । चतुरमतिः एतं प्रस्तावं ससन्तोषम् अङ्गीकृतवान् ।

राजा क्षणकालं चिन्तनं कृत्वा अवदत् - ''काव्यानां गुणदोषादिविमर्शनं कृत्वा चतुरमतिः प्राथमिकनिर्णयं करोतु । अन्ते श्रेष्ठः कविः कः इति अहम् एव निर्णेष्यामि'' इति । एतत् सर्वैः अङ्गीकृतम् ।

ततः काव्यगोष्ठ्याम् अनेके कवयः अरुणाचलसौन्दर्यं वर्णयन्तः काव्यं श्रावित-वन्तः । चपलशर्मा अपि स्वकवितां श्रावितवान् । श्रोतारः सर्वेषां काव्यानि श्रुत्वा हर्षेण करताडनं कुर्वन्तः प्रोत्साहितवन्तः ।

गोष्ठ्याः अन्ते चतुरमतिः अवदत् - ''महाराज ! मम एकं निवेदनम् अस्ति । वयं सामान्यानाम् अपि कवीनाम् असाधारण-




कविताः श्रुतवन्तः । सर्वे श्रोतारः सोत्साहं काव्यरसम् आस्वादितवन्तः । एतस्मात् एतावत् तु स्पष्टं यत् अरुणाचलवायुः एव काव्यप्रेरकः अस्ति, तं यः सकृत् सेवते सः निश्चयेन कविः भविष्यति इति । तादृशे परिसरे यः जन्म प्राप्तवान्, यश्च तत्रत्यं वायुं दीर्घकालं सेवितवान् तस्य नाडीषु काव्यरसमयम् एव रक्तं प्रवहति । अतः तत्र जातः जनः प्राचीनकवित्वेन परिगणनीयः भवति । तस्य काव्यं श्रेष्ठं स्यात् चेदपि पूर्वघोषितानां नियमानाम् अनुगुणं तम् एतस्यां स्पर्धायाम् अनधिकारिणं भावयामः चेत् वरम्'' इति ।

अरुणाचले जन्म प्राप्तवान् चपलशर्मा एकः एव । राजा चतुरमतेः चातुर्यं मनसा श्लाघमानः मन्दहासपूर्वकम् एतं प्रस्तावं

पुरस्कृतवान् । ततः श्रेष्ठः कविः चितः । तस्मै दशसहस्रं सुवर्णनाणकानि दत्तानि । अन्येभ्यः उत्तमकवितारचयितृभ्यः कविभ्यः अपि प्रोत्साहकपारितोषिकाणि दत्तानि ।

'चतुरमतिः ईर्ष्याकारणतः एव उपायेन मां स्पर्धायाम् अनर्हं घोषितवान् । राजानं वस्तुस्थितिं निवेद्य यथायोग्यं दण्डनीयः सः' इति चिन्तितवान् चपलशर्मा ।

अत्रान्तरे राजा एव वार्तां प्रेषितवान् - 'भवता अहं द्रष्टव्यः' इति । चपलशर्मा राजानं दृष्टवान् । तदा राजा अवदत् - ''भवान् चतुरोक्तिभिः मां सदा तोषयन् भवति इत्यतः अहं भवद्विषये सन्तुष्टः अस्मि । मम प्रियः अपि अस्ति भवान् । भवति स्थितां प्रीतिम् अवलम्ब्य अहं किञ्चित् वक्तुम् इच्छामि । सुगन्धतैलस्य लेपनतः किञ्चित्कालं शरीरे सौगन्ध्यं भवति । वृक्षात् लतातः वा दूरं गतं पुष्पम् अपि किञ्चित्कालम् परिमलं दातुम् अर्हति । अरुणाचलं दृष्ट्वा आगतानां विषये अयम् एव अंशः अन्वितः भवति । ये अरुणाचलं सद्यःकाले दृष्ट्वा आगताः तेषां कवितासु तत्रत्यस्य परिसरस्य सौगन्ध्यं प्राधान्येन दृश्यते स्म । भवान् तु यद्यपि तत्रैव जातः, तत्रैव च प्रवृद्धः, तथापि दीर्घकालं यावत् भवतः सम्पर्कः नास्ति इति कारणतः भवतः कवितासु तत्रत्यः गन्धः रसः वा न दृश्यते स्म । यदि भवते पुरस्कारः दत्तः स्यात् तर्हि मया पक्षपातः आचरितः स्यात् । जनाः मम पक्षपातपूर्णनिर्णयं निन्दितवन्तः स्युः अपि । 'अहं पक्षपातं न आचरामि । अतः भवान् पुरस्कारं प्राप्तुं न अर्हति । ततः भवतः अपमाननं स्यात् । भवतः गौरवं च विनष्टं स्यात्' इति चतुरमतिः जानाति स्म । भवते एव श्रेष्ठकविपारितोषिकं दातव्यम् इति मम प्रबला इच्छा आसीत् । किन्तु भवतः कवितायाः स्तरः तु नितरां निम्नः दृष्टः । अहं तु किङ्कर्तव्यतामूढः संवृत्तः । चतुरमतिः उपायेन व्यवहरन् भवतः अपमाननावकाशं निवार्य माम् अपि धर्मसङ्कटात् उद्धृतवान् । विवेकी भवान् एतत् सर्वम् अवगतवान् इति अहं भावये'' इति ।

चतुरमतेः व्यवहारस्य आन्तर्यं राज्ञः मुखात् श्रुत्वा चपलशर्मा अवगतवान् यत् चतुरमतिना न अपकृतं, प्रत्युत नितराम् उपकृतम् इति ।



# कावेरीतीरप्रयाणम् -७

## अन्तिमः द्वीपः

* *वर्णनम्* - जयन्ती महालिङ्गम्
* *चित्रम्* - गौतमसेनः



***शिलादुर्गं, तदुपरि स्थितः देवालयः च***

कावेरी दक्षिणपूर्वदिशि प्रवहन्ती तिरिचिरापल्लिजनपदं प्रविश्य श्रीरङ्गप्राप्तिपर्यन्तं विशालपात्रतां प्राप्नोति । अतः अत्र सा 'अखण्डकावेरी' इति निर्दिश्यते । तिरिचिरापल्लिजनपदं तमिळुनाडुराज्यस्य 'तण्डलागारम्' इति उच्यते । कावेरीनदीम् उभयतः केदाराः, कदलीवनानि, इक्षुक्षेत्राणि, नारिकेलोद्यानानि च विराजन्ते । 'तिरिचिरापल्ली'शब्दः त्रिशिरोनामकस्य राक्षसस्य नाम्ना सम्बद्धः इति केचन परिभावयन्ति । कावेर्याः विशालपात्रतावैभवं वयं शिलादुर्गम् आरुह्य बहुसमीचीनतया द्रष्टुं शक्नुमः । एतच्च दुर्गं ७६ मीटर्-उन्नतायाः अखण्डशिलायाः उपरि निर्मितम् अस्ति । भूगर्भशास्त्रज्ञाः अभिप्रयन्ति यत् एषा शिला अतिप्राचीना - तन्नाम ३,७०,००० वर्षेभ्यः पूर्वम् उत्पन्ना - इति । ३४४ सोपानानि आरुह्य एतत् शिलादुर्गं प्राप्तव्यम् । त्रिचिसमीपे स्थितम् एतत् दुर्गं क्रि. पू. २ - क्रि. श. २ - मध्यकाले चोलराजैः निर्मितम् । त्रिचिनगरं तेषां राजधानी आसीत् । स्थानीयाः जनाः एतत् दुर्गं 'मेलुकोट्टै'पदेन निर्दिशन्ति । एतेन दुर्गेण बहूनि युद्धानि दृष्टानि । तेन १७५१ तमे वर्षे अन्तिमं युद्धं दृष्टं, यच्च आङ्ग्लेयानां फ्रेञ्चजनानां च मध्ये प्रवृत्तम् । तदा त्रिचिनगरं त्रीणि वर्षाणि यावत् शत्रुभिः आवृतम् आसीत् । अन्ते राबर्ट्क्लैबस्य जयः जातः । इदानीं तत् दुर्गं नितरां जीर्णावस्थाम् आपन्नम् अस्ति । मुख्यद्वारभागमात्रम् उत्तमस्थितौ अस्ति ।

दुर्गस्य अन्तः शिलाशिखरे गजमुखस्य गणेशस्य आलयः अस्ति । एतन्मन्दिरगमनमार्गम् उभयतः अन्ये अपि देवालयाः केचन दृश्यन्ते । तेषु शिलायाः उत्तर-भागीयमुखे रचिताः पल्लवगुहान्तर्गत-देवालयाः



*शिलाशिखरे स्थितः गणेशदेवालयः*

तावत् अतिप्राचीनाः । तत्र ये शिलालेखादयः प्राप्ताः तेषां परिशीलनात् स्पष्टं भवति यत् ते देवालयाः पल्लवराजस्य प्रथम-महेन्द्रवर्मणः (क्रि. श. ६००-६३०) काले निर्मिताः इति । तेषु शिलालेखेषु हिन्दु-देवतानां स्तुतिः कृता दृश्यते । एकस्मिन् शिलालेखे गङ्गाधरः नाम कविः कावेर्याः सौन्दर्यम् एवं वर्णयति – ''एषा नदी पल्लवानां प्रिया । आधिकारिकतया पल्लवानाम् एव सा । नदीपरिसरः नितरां मनोमोहकः । नद्याः तीरे स्थितः हरिद्वर्णमयः पुष्पमयश्च परिसरः नद्याः कण्ठहारायते'' इति ।

शिलामार्गे शतस्तम्भात्मकः कश्चन शिवालयः अस्ति । आराध्यदेवः शिवः अत्र 'मातृभुतेश्वर'नाम्ना निर्दिश्यते । सः 'तयुभनवार्' इत्यपि निर्दिश्यते । यः ईश्वरः मातृत्वं प्राप्तवान् सः मातृभूतेश्वरः । शिवस्य मातृस्थानप्राप्तिः कथं जाता इति अधस्तनकथा निरूपयति –

कदाचित् रत्नावतीनामिका गर्भवती महिला पूम्पहारप्रदेशे निवसन्तीं मातरं प्रतीक्षमाणा आसीत् । कावेरी पूर्णप्रवाहा आसीत् इत्यतः माता नदीक्रमणे असमर्था जाता । अत्रान्तरे रत्नावती प्रसूतवती । तदा शिवः एव तस्याः मातृरूपं धृत्वा सप्ताहं यावत् सेवां कृतवान् । सप्ताहानन्तरं माता त्रिचिनगरं प्राप्तवती ।

अत्रत्यः शिवनामकः कविः 'शिवन् सेय्याल्' – नामकानि भक्तिपराणि गीतानि रचितवान् अस्ति ।

त्रिचीतः सप्त की. मी. दूरे कावेरी द्विधा विभक्ता सती पुनरपि एकं द्वीपं निर्माति । तया निर्मितेषु अन्तिमः द्वीपः अयम् । एषः प्रदेशः 'श्रीरङ्गम्' इति, 'अन्त्यरङ्गं'-नाम्ना च निर्दिश्यते ।

श्रीरङ्गस्य अधिदेवः रङ्गनाथस्वामी (विष्णुः) । सः अत्र आदिशेषशायी । तृतीये चतुर्थे वा क्रिस्तशतके निर्मितं



*श्रीरङ्गमन्दिरस्य सुन्दरं विमानम्*

स्यात् एतत् मन्दिरम् । अत्रत्यं स्थलपुराणम् एवं श्रूयते -

अयोध्याधिपतिः रामः रङ्गनाथमूर्तिं विभीषणाय दत्तवान् । लङ्कां प्रतिगच्छन् विभीषणः श्रान्तिम् अनुभवन् कावेर्याः तीरे शयितवान् - मूर्तिं पार्श्वे स्थापयित्वा । निद्रां समाप्य उत्थितः सः मूर्तिम् उन्नेतुं प्रयत्नं कृतवान् । किन्तु तेन न शक्तम् । तदीयः महान् प्रयत्नः अपि विफलः । सः उच्चैः विलपनम् आरब्धवान् । चोलनृपतिः एतत् श्रुत्वा तत्र आगतवान् । तदवसरे भगवान् रङ्गनाथः तत्र प्रत्यक्षीभूय - ''अहम् अत्रैव पवित्रे कावेरीतीरे वासं कर्तुम् इच्छामि । अतः मदर्थम् अत्रैव मन्दिरं निर्मीयताम् । विभीषणस्य आनुकूल्यार्थं मन्दिरस्य मुखम् लङ्काभिमुखं - तन्नाम उत्तरदिशि - भवतु'' इति अवदत् । ततः तत्रैव मन्दिरं निर्मितम् ।



श्रीरङ्गमन्दिरस्य राजगोपुरम्

श्रीरङ्गस्थं मन्दिरं 'तिरुवरङ्गम्' इत्यपि प्रसिद्धम् । 'कोयल्' (मन्दिरम्) इत्येतावता अपि जनाः श्रीरङ्गम् एव अभिजानन्ति । भारते एव अतिविशालत्वेन ख्यातम् एतत् मन्दिरं ६,३१००० वर्गमीटर्परिमिते क्षेत्रे प्रसृतम् अस्ति । आलयरचना सप्तप्राकारात्मिका अस्ति । अन्तिमस्य प्राकारस्य आकारः ८६४ मी. x ७४२ मी. । अन्तिमेषु त्रिषु प्राकारेषु आपणाः गृहाणि च सन्ति । लघुनि अपि एतस्मिन् नगरे लक्षाधिकजनाः निवसन्ति । एतस्य आलयस्य २१ गोपुराणि सन्ति । प्रवेशद्वारत्वेन निर्मितम् उन्नतं भवनम् एव 'गोपुरं' नाम । प्रमुखं गोपुरं 'राजगोपुरम्' इति उच्यते । तत् दक्षिणभारते अद्वितीयम् । एतत् ७२ मीटर्-उन्नतं त्रयोदश-अट्टात्मकं च अस्ति । वस्तुतः अष्टादशे शतके एतस्य निर्माणम् आरब्धम् । अनन्तरकाले प्रवृत्तस्य आङ्ग्लो-फ्रेञ्च्युद्धस्य कारणतः एतस्य निर्माणकार्यं स्थगितम् अभवत् । १९८८ तमे वर्षे च एतत् समाप्तम् अभवत् ।

अत्रत्यं गर्भगृहं लघु । तन्नाम - ७२ मी. x ५४ मी. आकारोपेतम् । अतः तैलदीपानां मन्दप्रकाशे अस्पष्टतया मूर्तिं द्रष्टुं शक्या । किन्तु यदा अर्चकः कर्पूरनीराजनं करोति तदा भक्ताः मूर्तेः पूर्णदर्शनं प्राप्तुं शक्नुवन्ति ।

मन्दिरस्य एकस्मिन् भागे द्वादशानाम् आल्वाराणां मूर्तयः सन्ति । आल्वाराः नाम वैष्णभक्ताग्रेसराः कवयः । श्रीवैष्णवसम्प्रदायस्य प्रवर्तकः नन्दमुनिः तेषां गीतानि 'नालैयर् प्रबन्धम्'नामके ग्रन्थे सङ्गृहीतवान् अस्ति । श्रीवैष्णसम्प्रदायस्य विस्तारकस्य महातत्त्वज्ञानिनः श्री रामानुजाचार्यस्यापि मूर्तिः अस्ति एतस्मिन् मन्दिरे ।

चतुर्थे प्राकारे होय्सलशैल्या निर्मितं वेणुगोपालस्वामिमन्दिरम् अस्ति । अत्रत्यायाः शिल्पकलायाः कारणतः एतत् मन्दिरं दक्षिणभारते स्थितेषु सुन्दरमन्दिरेषु अन्यतमत्वेन परिगण्यते । अत्रापि सहस्रस्तम्भात्मकं विशालप्राङ्गणम् अस्ति, यत्र च रथः स्थाप्यते । कम्बरामायणस्य रचयिता कविः कम्बवर्यः अत्रैव उपविश्य ग्रन्थरचनां कृतवान् इति कथा श्रूयते ।

नायकवंशीयानां शासनकाले मधुरैनगरस्थेन, तञ्जावूरुस्थेन, श्रीरङ्गस्थेन च मन्दिरेण उपायनरूपेण विविधानि वस्तूनि, भूमिः, ग्रामाः च प्राप्ताः । देवस्थाने नूतनाः भागाः तदवधौ एव योजिताः । अच्युतप्पनायकः कश्चन समर्थः राजा । गोविन्ददीक्षितः नाम प्रधानमन्त्री उत्तमकार्येषु प्रवर्तने नितराम् उपकरोति स्म । तस्य शासनकाले एव गोपुरविमानं सुवर्णफलकैः विभूषितं जातम् । नायकवंशीयानां काले एव शिलादुर्गस्य समीकरणं विस्तारणं च प्रवृत्तम् ।



अत्र मुस्लिम्राजकुमार्याः अपि कश्चन विग्रहः अस्ति । सा रङ्गनाथस्य परमभक्ता आसीत् । तस्याः नाम आसीत् 'तुलुक्क नाचियार्' इति । प्रतिदिनं प्रातः भगवते रङ्गनाथाय क्षीरं, दधि, शाकः, भक्ष्यं च नैवेद्यरूपेण यत् अर्प्यते तस्य कश्चन भागः एतस्याः पुरतः स्थाप्यते ।

वैकुण्ठैकादशीदिने (डिसेम्बर्मासे जनवरीमासे वा) अत्र महान् उत्सवः प्रचलति प्रतिवर्षम् । तदा रङ्गनाथस्वामिनः रथयात्रा प्रचलिष्यति । सहस्रशः भक्ताः भक्त्या रथम् आकर्षन्ति । मार्च्मासे एप्रिल्मासे वा शुभमुहूर्ते भगवान् पुनरपि देवालयतः बहिः नीयते महता वैभवेन । त्रिचीसमीपस्थे उरैयूर्प्रदेशे स्थितं नाचियार्मन्दिरं प्रति सः नीयते । उरैयूर् पूर्वं चोलानां राजधानी आसीत् । अत्र उत्सवाङ्गतया नव दिनानि यावत् विविधसेवाः प्रवर्तन्ते । एकस्मिन् दिने अर्चकगणः द्विधा विभक्तः सन् कलहसेवाम् अपि समर्पयति !

तमिऴुवर्षारम्भदिने अत्र वार्षिकोत्सवः प्रचलति । तस्मिन् दिने देवालयस्य धर्माधिकारी विशिष्टवेषं धृत्वा देवस्य पुरतः उपस्थितः भवति । सः वार्षिकमूल्येन कृष्यर्थं भूमिम् अधिगृह्णन् कृषिकः इव अभिनयन् भगवते वार्षिकदेयं भाटकं समर्पयति । 'पूर्वम् अत्रत्याः भूमिग्रामादयः भगवतः आसन् । रङ्गनाथस्वामी अद्यापि अस्ति एव । सः एव एतेषां स्वामी । प्रतिवर्षम् उपयोगाय ततः प्राप्यते' इत्येतम् अर्थं गमयति एषः व्यवहारः ।



*श्रीरङ्गमन्दिरे सहस्रस्तम्भात्मके प्राङ्गणे दृश्यमाना शिल्पकला*

यद्यपि श्रीरङ्गस्य अनन्तरं कावेर्याः धाराद्वयं सम्मिलति, तथापि एकधारात्वं तु न सिद्ध्यति तत्र । एका लघुधारा ततः निर्गत्य उत्तरभागम् अनुसरन्ती कोल्लिडाम्प्रदेशं (कोलैरून् इति नामान्तरम्) इतः अनतिदूरे चोलराजः करिकालन्वर्यः, यश्च १६०० वर्षेभ्यः पूर्वं शासनं करोति स्म, 'कलनै'नामकम् अपूर्वम् जलबन्धं निर्मितवान् आसीत् ।



# शिवस्य विवाहः

शरच्चन्द्रिकादेशस्य राजा चन्द्रसेनः । राज्ञी चूडामणिः । तयोः अपत्यं न आसीत् । अतः तौ विविधाः पूजाः, व्रतानि, यज्ञयागादीनि, ऋषिमुनीनां सेवां च कृतवन्तौ । अन्ते ताभ्याम् एका सुन्दरी पुत्री प्राप्ता । एषा एव पुत्रत्वेन पोषणीया इति निश्चित्य तौ पुत्रत्वेन एव तां पोषितवन्तौ ।

राजकुमार्याः नाम मधुमित्रा इति । यद्यपि राजभवने बह्व्यः दास्यः आसन्, तथापि शान्तानामिकायां दास्यां विशेषादरः आसीत् मधुमित्रायाः ।

यदा मधुमित्रा पञ्चवर्षीया जाता तदा तया क्रीडादिनिमित्तं सख्याः अभावः अनुभूतः । अतः आदिनं सा हतोत्साहा तिष्ठति स्म । तस्याः मनसः तोषणार्थं दासी शान्ता स्वपौत्रस्य शिवस्य बाल्यसहजाः विनोदघटनाः वर्णयति स्म । एतादृशं मधुमित्रा आसक्त्या शृणोति स्म । तदनन्तरं किञ्चित्कालं उत्साहेन तिष्ठति स्म अपि ।

एकदा मधुमित्रा शान्ताम् उक्तवती – ''श्वः भवती आगमनसमये शिवम् अपि आनयतु । आवां सहैव क्रीडिष्यावः'' इति ।

यदि पौत्रः शिवः अन्तःपुरम् आनीयेत तर्हि कोऽपि किमपि वदेत् इति भीतिः शान्तायाः । तथापि राजकुमार्याः अपेक्षां निराकर्तुम् अशक्नुवती सा अनन्तरदिने पौत्रेण शिवेन सहैव अन्तःपुरम् आगतवती । अयम् अंशः केनापि न आक्षिप्तः । मधुमित्रा तु शिवेन सह महता सन्तोषेण क्रीडितवती । तस्याः मुखे आनन्दतरङ्गान् दृष्ट्वा राजा राज्ञी चापि सन्तुष्टौ । ततः आरभ्य शिवः प्रतिदिनम् अपि राजभवनम् आगतवान् ।

कालः गतः । कदाचित् राज्ञी – 'इतःपरं प्राप्तवयस्कायाः पुत्र्याः विवाहः चिन्तनीयः । शिवेन सह तस्याः हास-भाषण-सञ्चारादिकं न युज्यते' इति चिन्तितवती शिवं सूचितवती यत् भवता राजभवनं प्रति आगमनं न्यूनीकरणीयम् इति । शिवः विषयस्य सूक्ष्मतां जानन् राजभवनं प्रति आगमनं स्थगितवान् एव ।



शिवस्य अनागमनं ज्ञात्वा राजकुमारी नितरां खिन्ना जाता । दासीनां मुखात् स्वविवाहविषयिणीं चर्चां श्रुत्वा सा शान्ताम् अवदत् - ''अम्ब ! अहं शिवम् एव परिणेतुम् इच्छामि । यदि शिवं परिणेतुम् अहं न शक्नुयां तर्हि सजीवं न तिष्ठेयम्'' इति ।

एतत् श्रुत्वा शान्ता दिग्भ्रान्ता । सा जानाति स्म यत् राजकुमारीशिवयोः मध्ये प्रीतिपूर्णः व्यवहारः अस्ति इति । किन्तु राजकुमारी - 'शिवम् एव परिणेष्यामि, न अन्यम्' इति वदेत् इति तया स्वप्ने अपि न चिन्तितम् आसीत् ।

'यदि एषः विवाहः प्रचलेत् तर्हि वरं स्यात्' इति तस्याः विचारः । अतः सा बहु विचिन्त्य राजकुमारीम् उक्तवती - ''सद्यः-कालीनस्थितौ भवती शिवं परिणेतुं न अर्हेत् एव । तावदेव न, अयं विवाहप्रस्तावः अपि महते अनर्थाय स्यात् । अतः भवती मातरं वदतु यत् - इदानीम् अहं विवाहं न इच्छामि इति । तेन विवाहचिन्तनं किञ्चित् अग्रे सारितं भवेत् । तदभ्यन्तरे कोऽपि परिहारमार्गः स्फुरेत्'' इति ।

राजकुमारी एतं प्रस्तावम् अङ्गीकृतवती । मातरं तथैव उक्तवती च ।

पितामहीमुखात् राजकुमार्याः अपेक्षां श्रुत्वा शिवः आनन्दतुन्दिलः जातः । तदा शान्ता पौत्रम् उक्तवती - ''वत्स ! राजकुमारी भवन्तं परिणेतुम् इष्टवती इत्येतावन्मात्रेण भवान् राजकुमारीं परिणेतुं न अर्हति । राजकुमार्याः परिणेतुः काश्चन योग्यताः स्युः एव । राजा भवन्तं स्वयम् आहूय - 'मम पुत्रीं परिणयतु' इति यथा प्रार्थयेत् तथा करणीयं भवता'' इति ।

एतत् श्रुतवतः शिवस्य मुखं गम्भीरं जातम् । 'धनं शक्तिं योग्यतां च प्राप्य एव प्रत्यागमिष्यामि' इति पितामहीम् उक्त्वा तस्याः आशीर्वादं प्राप्य गृहात् निर्गतवान् सः ।

एकम् अरण्यं प्राप्तं तेन । तत्र कस्यचित् वृक्षस्य अधः डमरुकं हस्तेन गृहीत्वा खेदेन उपविष्टः कश्चन तरुणः तेन दृष्टः । खेदस्य कारणं पृष्टः सः तरुणः अवदत् - ''मम नाम रागेशः इति । दीर्घकालं यावत् मया कश्चन गुरुः सेवितः । सः मह्यम् एतत् डमरुकं दत्तवान् । किन्तु एतस्य वादनं यः शृणोति सः शिरोवेदनां प्राप्नोति । एतत् वादयन्तं मां जनाः ताडयित्वा ग्रामात् बहिः प्रेषितवन्तः ।

दौर्भाग्यात् मया वराकम् एतत् प्राप्तम्'' इति ।

''मित्र ! अलं धैर्यच्युत्या । कौशलपूर्वकम् उपयुक्तं यत्किञ्चित् वस्तु लाभकरम् एव भवितुम् अर्हति । अतः भवान् मया सह आगच्छतु । आवां भाग्यपरीक्षां करवाव'' इति अवदत् शिवः । ततः तौ अग्रे गतवन्तौ ।

किञ्चित् अग्रे यदा गतं तदा कश्चन जनः पङ्कमय्यां भूमौ शीर्षासनशैल्या अधोमुखं स्थित्वा किमपि परिशीलयन् ताभ्यां दृष्टः । यदा सः कार्यं समाप्य उत्थितवान् तदा शिवः तं पृष्टवान् - ''कः भवान् ? भूमौ शिरः निधाय किं वा दृष्टं भवता ?'' इति ?

''अहं नेत्रेशः । अहं पृथिवीस्थं निधिम् अभिज्ञातुं शक्नोमि'' इति अवदत् सः ।

शिवः आश्चर्येण अपृच्छत् - ''किं भवता इदानीं निधिः कोऽपि दृष्टः अत्र ?'' इति ।

''आम् । शतपदपरिमिते अधोदेशे अत्र अपारं सुवर्णम् अस्ति । किन्तु तस्य प्राप्तिः प्रायः असम्भवः । यतः तावत् अधः खननं न सुलभसाध्यम्'' इति अवदत् नेत्रेशः ।

''मित्र ! उपायेन सर्वं साधयितुं शक्यते । किन्तु तदर्थं योग्यः कालः प्रतीक्षणीयः अस्माभिः । तदस्तु, एषा विशिष्टा शक्तिः कथं प्राप्ता भवता ?'' इति अपृच्छत् शिवः ।

''कश्चन मुनिः अरण्ये तपः कुर्वन् आसीत् । कदाचित् ध्यानमग्नः सः अकस्मात् आगतात् व्याघ्रात् मया रक्षितः । ततः सन्तुष्टः मुनिः मह्यम् एतां दिव्यदृष्टिं दत्तवान्'' इति विवृतवान् नेत्रेशः ।

''एवं तर्हि भवान् अपि मया सह आगच्छतु । सौभाग्यकरक्षणं प्राप्तुं वयं



मिलित्वा कार्यं करवाम'' इति तम् उक्तवान् शिवः । ततः ते त्रयः अग्रे गताः ।

अग्रे तैः कश्चन धनुर्धारी दृष्टः । तस्य हस्ते क्रीडनकसदृशम् धनुः आसीत् । वृक्षस्य अधः उपविश्य सः किमपि चिन्तयति स्म ।

''मित्र ! का चिन्ता भवतः ? किमर्थम् एतत् क्रीडनकसदृशं धनुः गृहीतं भवता ? किम् एतेन कोऽपि पक्षी वा मारयितुं शक्यः ?'' इति तम् अपृच्छत् शिवः ।

''आकारेण लघु अपि एतत् अपूर्वशक्तिशालि । लक्ष्यम् एकाग्रचित्ततया ध्यात्वा एतस्य धनुषः साहाय्येन यदि बाणप्रयोगः क्रियते तर्हि बलवान् अपि शत्रुः क्षणमात्रेण संहृतः भवेत् । विशिष्टं धनुः एतत्'' इति अवदत् सः तरुणः ।



''एतत् कथं प्राप्तं भवता ? भवतः नाम किम् ?'' इति कुतूहलेन अपृच्छत् शिवः ।

तदा सः धनुर्धारी अवदत् - ''मम नाम बलेशः इति । कश्चन मान्त्रिकः जनान् वञ्चनया गृहीत्वा दुष्टशक्तेः उपासनार्थं देव्यै बलिरूपेण अर्पयति स्म । अहम् उपायेन तम् एव वञ्चयित्वा देव्यै बलिरूपेण अर्पितवान् । तेन तुष्टा देवी मह्यम् एतत् दिव्यं धनुः दत्तवती । किन्तु एतस्य उपयोगः कथं कदा करणीयः इति मया न ज्ञायते । तदेव चिन्तयन् अत्र उपविष्टः अस्मि'' इति ।

''अस्तु, तत् अहं सूचयिष्यामि । अस्माभिः सह भवान् अपि आगच्छतु'' इति उक्तवान् शिवः । बलेशः एतत् अङ्गीकृतवान् । चत्वारः अपि अग्रे गताः ।

ततः अनतिदूरे कठोरकर्णः नाम कश्चन नरभक्षकः राक्षसः तैः दृष्टः । तत्प्रदेहे सञ्चरतः जनान् गृहीत्वा भक्षयति स्म सः । युगपत् चतुरः तरुणान् दृष्ट्वा सन्तुष्टः सः तेषां पुरतः आगत्य अतिष्ठत् ।

शिवः झटिति रागेशस्य हस्तात् डमरुकं स्वीकृत्य वेगेन वादितवान् । कर्णकठोरं तदीयं शब्दं श्रुत्वा राक्षसः शिरोवेदनां प्राप्तवान् । राक्षसेन - 'वादनं स्थगयतु' इति सूचितः अपि शिवः डमरुकवादनं न स्थगितवान् । अन्ते शिरोवेदनां सोढुम् अशक्नुवन् राक्षसः - ''भोः, प्राणघातकस्य एतस्य डमरुकस्य वादनं स्थगयतु कृपया । अन्यथा मम शिरः भग्नं भविष्यति । भवतः पादौ गृह्णामि । भवान् यत् वदति तत् करिष्यामि च । कृपया वाद्यवादनं स्थगयतु'' इति ।

डमरुकवादनं स्थगयित्वा शिवः राक्षसं सुवर्णनिक्षेपस्थलं दर्शयित्वा - ''अत्र खननं कृत्वा सुवर्णं बहिः आनयतु'' इति आदिशत् । राक्षसः स्वस्य पूर्णशक्त्याः उपयोगेन खननं कृत्वा सुवर्णराशिम् उपरि आनीय शिवाय अर्पितवान् ।

शिवः मित्रैः सह राजधानीं गत्वा तं सुवर्णराशिं महाराजाय समर्प्य - ''एषः सुवर्णराशिः प्रजानां कल्याणाय उपयोक्तव्यः । यदि अपर्याप्तता भवति तर्हि पुनरपि आनीय दातुं वयं सिद्धाः'' इति निवेदितवान् ।

राजा चन्द्रसेनः एतत् उपायनं प्राप्य सन्तुष्टः सन् शिवं तन्मित्राणि च सम्मानितवान् । राजभवने विशिष्टातिथिरूपेण तेषां वासार्थं योग्यां व्यवस्थां कल्पितवान् च ।

अत्रान्तरे प्रतिवेशी राजा श्रीसेनः एकं पत्रं दूतद्वारा प्रेषितवान् । पत्रे लिखितम् आसीत् – ''भवतः पुत्री मधुमित्रा मम पुत्राय दातव्या । अन्यथा सप्ताहाभ्यन्तरे सेनया सह आगत्य भवन्तं संहृत्य, भवद्देशं जित्वा राजकुमारीं बलात् नीत्वा विवाहं निर्वर्तयिष्यामि'' इति ।

एतत् पत्रं प्राप्य चन्द्रसेनः भीतः चिन्ताक्रान्तश्च जातः । सः स्वपुत्रीं मधुमित्रां श्रीसेनपुत्राय दातुं न इच्छति स्म । किन्तु श्रीसेनस्य आक्रमणं सम्मुखीकर्तुं तस्य सामर्थ्यम् अपि न आसीत् । श्रीसेनपुत्रः विलासजीवनासक्तः, दुराचारः, अयोग्यः च आसीत् । अतः चन्द्रसेनः किङ्कर्तव्यतामूढः जातः ।

महाराजः स्वसमस्यां पत्नीं पुत्रीं च उक्तवान् । मधुमित्रा शिवं प्रवृत्तं सर्वं निवेदितवती । ततः शिवः राजानम् एकान्ते दृष्ट्वा अवदत् – ''प्रभो ! चिन्तां परित्यज्य युद्धस्य अङ्गीकारं दूतद्वारा सूचयतु भवान् । मम मित्रस्य सकाशे दुष्टनिग्राहकं धनुः अस्ति । मम तु विश्वासः अस्ति यत् तस्य धनुषः साहाय्येन बलवान् अपि शत्रुः अवश्यं निग्रहीतुं शक्यः इति । अतः भवान् युद्धम् उद्घोषयतु । सैन्यं च मया सह प्रेषयतु । शत्रुनिग्रहम् अहं सम्पादयिष्यामि । भवान् निश्चिन्ततया राजभवने एव तिष्ठतु'' इति ।

युद्धं घोषितम् । सैन्येन सह रणरङ्गं गतवान् शिवः । तस्य हस्ते स्थितम् अल्पाकारकं धनुः दृष्ट्वा हस्तिवाहनः श्रीसेनः अट्टहासपूर्वकम् अवदत् – ''रे मूर्ख ! क्रीडनकसदृशेन धनुषा सह किमर्थम् आगतः भवान् ? एषा न क्रीडाभूमिः, प्रत्युत रणभूमिः'' इति ।

शिवस्तु प्रतिवचनं किमपि अनुक्त्वा शान्तेन मनसा देवीं ध्यात्वा एकाग्रचित्ततया श्रीसेनस्य वक्षःस्थलं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । स च बाणः श्रीसेनस्य हृदये लग्नम् । सः गतप्राणः सन् भूमौ अपतत् । रागेशः शत्रुसैन्यं हठात् प्रविश्य डमरुकम् उच्चैः वादितवान् । कठोरकर्णः शत्रुसैनिकान् गृहीत्वा खादितुम् उद्युक्तः । एतस्मात् कारणतः श्रीसेनसैन्यम् अस्तव्यस्तं जातम् । युद्धस्य वार्ता समाप्ता ।

राजा चन्द्रसेनः महता वैभवेन शिवमधुमित्रयोः विवाहं निर्वर्तितवान् । श्रीसेनराज्यं शिवाय एव अर्पितवान् च । शिवः स्वमित्राणि मन्त्रिस्थाने नियोज्य शिवसेननाम्ना उत्तमरीत्या राज्यपरिपालनं कृतवान् ।



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अकिञ्चनः - utterly destitute
अवितथा - not false (true)
आत्यन्तिकी - excessive
आवृत्तः - covered
आवृत्ता - repeated
इक्षुः - sugarcane
उत्कृष्टम् - best
उत्पाटनम् - uprooting
उद्धरति - drawing up
उपत्यका - low land
कलायः - ground nut
कानीनः - son of an unmarried woman
क्षतिग्रस्तः - wounded
चाकचक्यता - brilliancy
तण्डुलः - rice
तन्तुः - thread
तायकम् - a talisman
द्रवति - melts
धारा - edge
निकृष्टम् - vulgar
निराधारम् - baselessly
निशितता - sharpness
नूपुरम् - anklet
पौनःपुन्येन - oftenly
भृतिः - wage
युगलम् - couple
रोम - hair on the body
लवमात्रम् - very little
लोहशोधकम् - metel detector
विच्छायम् - pale
विलक्षणः - peculiar
व्रीहिः - paddy
शाकः - vegetable
श्रृगालः - fox
श्रृङ्गम् - horn
श्लाघ्यः - appreciable
सम्प्रोक्षणम् - sprinkling
सम्भाव्यता - possibility
समुत्सुकता - interest
स्थलपुराणम् - legend

☆ ☆ ☆

## ५१. युद्धसन्नाहः

# महाभारतम्

पाण्डवसेना कुरुक्षेत्रं प्रविश्य योग्ये स्थले स्थितवती । तत्र तृण-काष्ठ-जल प्रभृतीनाम् उत्तमव्यवस्था आसीत् । समीपे श्मशानं, मन्दिरम्, ऋष्याश्रमः वा न आसीत् । कृष्णः अर्जुनः च अन्यैः कैश्चित् राजभिः सह गत्वा शिबिरनिर्माणप्रदेशं समग्रं परिशील्य आगतवन्तौ । धृष्टद्युम्नः, सात्यकिः, युयुधानश्च शिबिरनिर्माणार्थं भूमेः मापनं कृत्वा विविधस्थलनिश्चयं कृतवन्तः । हिरण्वतीनद्याः तीरे पाण्डवशिबिरं निर्मितम् अभवत् । शिबिरं परितः परिखा निर्मिता । सर्वेषु अपि शिबिरेषु जलस्य भोजनस्य च योग्या व्यवस्था उपकल्पिता । सहस्रशः शिल्पिनः, वैद्याः च शिबिरस्थले उपस्थिताः । आयुध-कवचादीनां, मधुघृतादीनां च महान् सङ्ग्रहः कृतः । युधिष्ठिरः एकैकम् अपि शिबिरं गत्वा सर्वविधव्यवस्थां स्वयं परिशीलितवान् । पाण्डवैः कृतस्य शिबिर-निर्माणस्य वार्तां श्रुत्वा मित्रराजाः सैन्येन सह आगत्य युद्धभूमौ उपस्थिताः अभवन् ।

अपरत्र हस्तिनापुरे कृष्णस्य निर्गमन-समनन्तरम् एव दुर्योधनः दुश्शासन-शकुनि-कर्णादीन् आनाय्य अवदत् - ''कौरव-पाण्डवयोः मध्ये युद्धं प्रचलतु इत्येव कृष्णस्य आन्तरङ्गिकी अपेक्षा । अतः एव सः पाण्डवान् अस्मद्विरुद्धं प्रवर्तयन् अस्ति । अस्माभिः अपि महता प्रमाणेन युद्धसन्नाहः करणीयः । भवन्तः वेगेन सैन्यं सज्जीकृत्य कुरुक्षेत्रे शिबिरव्यवस्थां कारयन्तु । खाद्य-पदार्थानाम् आनयनस्य मार्गः कदापि शत्रुवशं यथा न गच्छेत् तथा व्यवस्था द्रष्टव्या । शिबिरस्थले पर्याप्तमात्रेण आयुधानि, अन्यविधवस्तूनि च सङ्गृहीतानि भवन्तु । श्वः एव सेनायाः प्रस्थानं भवतु'' इति ।





कौरवाणां अपि शिबिराणि सन्नद्धानि जातानि । समग्रे हस्तिनापुरे सैनिकानां कोलाहलः उत्पन्नः । कौरवसैन्यं शिबिर-प्रदेशं प्राप्तवती ।

उभयपक्षीयम् अपि युद्धसन्नाहं दृष्ट्वा कदाचित् युधिष्ठिरः चिन्तां प्राप्य कृष्णम् अवदत् - ''हे कृष्ण, वयं यादृशं प्रयत्नं कर्तुम् उद्युक्ताः स च किं धर्मविरुद्धः न ? वयम् अस्मद्बन्धून्, भ्रातॄन्, पितामहादीन् च मारयन्तः वंशस्य एव हानिं जनयन्तः किं न स्मः ? एतस्मात् नरसंहाररूपात् युद्धात्, न जाने, कियन्तः निरपराधिनः प्राणैः वियुक्ताः भवन्ति इति, कियत्यः भगिन्यः विधवाः भवन्ति इति, कियतीनां मातृणाम् अङ्काः अपत्यशून्याः भवन्ति इति च । एतद्विषये धर्मशास्त्रस्य कः निर्णयः ?'' इति ।

तदा कृष्णः अवदत् - ''यदि कौरवाः न्याय्यं भागम् अस्मभ्यं दत्तवन्तः स्युः तर्हि वयं युद्धं न अचिन्तयिष्याम एव । यदि युद्धं न क्रियेत तर्हि अन्यायाधर्मादयः प्रवृद्धाः स्युः । अत्याचारपापादयः परिवृद्धाः भवेयुः । एतत् युद्धं धर्मस्य न्यायस्य च रक्षणार्थम् । अतः एव एतस्य अनिवार्यता'' इति ।

कृष्णस्य मुखात् एतत् श्रुत्वा धर्मराजः युद्धम् उद्घोषितवान् । एतेन समग्रे पाण्डवसैन्ये उत्साहसञ्चारः जातः ।

एतदनन्तरं युधिष्ठिरः भीमार्जुनौ अवदत् - ''वयं वंशस्य नाशं निवारयितुं वनवासं अज्ञातवासं च कृतवन्तः । असङ्ख्यानि कष्टानि सोढवन्तः । किन्तु कौरवाः अस्माकम् आशयं न अवगतवन्तः । अस्माकं सर्वान् प्रयत्नान् ते दौर्बल्यसूचकान् भावितवन्तः । इदानीं तु युद्धम् अपरिहार्यम् इत्यतः वंशनाशकालः सन्निहितः इति भाति । अस्माकं सर्वे प्रयत्नाः विफलाः । गुरुजनान् बान्धवान् च संहृत्य वयं यं विजयं प्राप्नुयाम सः किं सन्तोषाय भवेत् ? न्यायान्यायनिर्णयः एव इतोऽपि अस्फुटः अस्ति'' इति ।

तदा भीमार्जुनौ उक्तवन्तौ - ''मात्रा विदुरेण च यत् हितवचनम् उक्तं तस्मात् अन्यः धर्मः किं कोऽपि अस्ति ? द्रौपद्याः अपमाननं यत् तैः कृतं तस्य प्रतीकारात् श्रेष्ठः धर्मः को वा अस्ति ? मार्गदर्शकेन कृष्णेन बोधितात् इतरः धर्मः को वा स्यात् ? अधर्मात्याचाराणां निवारकः परमश्रेष्ठः धर्ममार्गः को वा अन्यः स्यात् ? युद्धे समुपस्थिते, उभयसैन्ययोः



अभिमुखं स्थितयोः, युद्धात् अन्यः धर्मः क्षत्रियस्य को वा अस्ति ? युद्धम् अपरिहार्यम् इत्यत्र विमतिः न दर्शनीया इदानीम्'' इति । कृष्णः तयोः वचनं समर्थितवान् ।

अनन्तरदिने दुर्योधनः स्वपक्षीयत्वेन उपस्थितम् एकादशाक्षौहिणीसैन्यं तत्तत्-सामर्थ्यानुसारं विभक्तवान् । उत्तमां सेनाम् अग्रे, मध्यमां मध्ये, सामान्याम् अन्ते च स्थापितवान् सः । छिन्नीभवतां रथानां समीकरणार्थम् अपेक्षितानि काष्ठानि एकत्र सङ्गृहीतानि । सर्वेषु रथेषु बाणपूर्णाः तूणीराः स्थापिताः । विविधानि आयुधानि, अन्यानि युद्धसामग्र्यादीनि च सङ्गृहीतानि ।

अनन्तरं दुर्योधनः एकादशाक्षौहिणीसैन्याय एकादश सेनापतीन् चितवान् । ते च - कृपाचार्यः, द्रोणः, शल्यः, सैन्धवः, सुदक्षिणः, कृतवर्मा, अश्वत्थामा, कर्णः, भूरिश्रवाः, शकुनिः, बाह्लीकः च ।

अनन्तरं सः भीष्मं दृष्ट्वा करौ संयोज्य अवदत् - ''महात्मन् ! महती अपि सेना योग्यसेनापतेः अभावे जयसाधने सर्वथा असमर्था भवति । पूर्वं हैहयक्षत्रियान् विरुध्य ब्राह्मणाः युद्धम् उद्घोषितवन्तः आसन् । तदा वैश्यशूद्रादयः ब्राह्मणानां साहाय्यं कृतवन्तः । क्षत्रियाणां सैन्यम् अल्पप्रमाणकम् आसीत् । तथापि सर्वेषु अपि युद्धप्रयत्नेषु क्षत्रियपक्षस्य एव जयः ! तस्य कारणं - क्षत्रियपक्षस्य एकः एव सेनापतिः आसीत् । सः दक्षः अपि आसीत् । किन्तु अन्यपक्षस्य तु जात्यनुगुणं सेनापतयः द्वित्राः । अतः तेषां पराजयः भवति स्म । अन्ते ब्राह्मणाः एतत् रहस्यम् अवगत्य समर्थं जनं सेनापतिपदे नियोज्य जयं प्राप्तवन्तः । भवान् नीति-शास्त्रज्ञः, पूज्यः, हितैषी, धर्मात्मा, अजेयः च अस्ति । अतः भवान् एव अस्माकं सैन्यस्य नेतृत्वं वहेत् । इन्द्रः देवान् यथा रक्षितवान् तथा वयं रक्षणीयाः भवता'' इति ।

एतां प्रार्थनां श्रुत्वा भीष्मः अवदत् - ''सेनापतिपदस्वीकारः मम सम्मतः । किन्तु मया सूचितम् अंशद्वयं भवता अङ्गीक्रियते चेदेव अहं सेनापतिभारं वहेयम् । अहं पाण्डवेषु कस्यापि वधं न करिष्यामि । यावत् कर्णः रणरङ्गे भवति तावत् मया रणरङ्गस्य प्रवेशः न क्रियते च । कर्णः मयि ईर्ष्यावान् भवति सदापि । अतः आवयोः उभयोः उपस्थितिः युगपत् भवितुं नार्हति रणरङ्गे''

इति ।

एतत् श्रुत्वा कर्णः अवदत् - ''राजन् ! माम् उपेक्षया पश्यन्तम् एतं धिक्कर्तुम् इच्छामि । अतः यावत् एषः जीवति तावद् अहं रणरङ्गं न प्रवेक्ष्यामि'' इति ।

एतदनन्तरं दुर्योधनः शास्त्रोक्तक्रमेण भीष्मं सेनापतिपदे अभिषिक्तवान् । तदीयः भ्राता, महती सेना च तम् अनुसृत्य रणरङ्गम् अगच्छत् ।

युद्धारम्भवार्ता बलरामेणापि श्रुता । अतः सः यादववीरैः सह पाण्डवशिबिरम् आगतवान् । पाण्डवाः, सर्वे राजानः, कृष्णः च तं महता आदरेण स्वागतीकृतवन्तः । बलरामः द्रुपदादीन् नमस्कृतवान् । पाण्डवैः दर्शिते आसने उपविश्य सः अवदत् - ''अचिरात् एव घोरं युद्धं, प्रजानां विनाशः च भविष्यति । एतस्य निवारणार्थं न दृश्यते कोऽपि उपायः । अतः एतावत् तु आशासे यत् भवन्तः अविकलाङ्गाः सन्तः जीवन्तु इति । पाण्डवाः यथा, तथा कौरवाः अपि मम बान्धवाः । मया कृष्णः बहुधा निवेदितः यत् कौरव-पाण्डवयोः विषये समाना प्रीतिः भवतु इति । किन्तु कृष्णः भवत्सु पाण्डवेषु एव अधिकां प्रीतिं दर्शयति । अतः मम वचनं तस्मै न अरोचत । भीमः दुर्येधनश्चापि मत्तः एव गदाप्रयोगशिक्षणं प्राप्तवन्तौ । अतः तौ उभौ अपि मम प्रियौ एव । एतस्मिन् युद्धे कृष्णस्य साहाय्यं प्राप्य पाण्डवाः जयं प्राप्स्यन्ति । किन्तु अहं पाण्डवानां यथा, तथा कौरवाणाम् अपि विनाशं द्रष्टुं न इच्छामि । अतः अहं सरस्वतीनदीतीरे स्थितानि तीर्थस्थानानि द्रष्टुं



गमिष्यामि'' इति ।

एतावत् उक्त्वा बलरामः तीर्थयात्रार्थं निर्गतवान् । तेषु एव दिनेषु रुक्मिण्याः सहोदरः रुक्मिः अक्षौहिणीसैन्येन सह पाण्डवशिबिरम् आगतवान् । युधिष्ठिरस्य सत्कारादिकं प्राप्य सः पूर्णायां राजसभायाम् अर्जुनम् अवदत् - ''अर्जुन ! एतस्मिन् युद्धे मम साहाय्यम् अवश्यकं चेत् वदतु । अहं शत्रून् समूलं नाशयिष्यामि । मां सम्मुखीकर्तुं कोऽपि न समर्थः । सर्वे भवत्पक्षीयाः राजानः अत्रैव सुखेन तिष्ठन्तु । अहं कृपद्रोणादीन् जित्वा भवद्राज्यं भवते प्रतिदास्यामि'' इति ।

एतत् श्रुत्वा अर्जुनः हसन् उक्तवान् - ''हे वीरवर ! युद्धस्य नाम श्रुत्वा भयं किमर्थं प्राप्येत मया ? गन्धर्वान् यदा अहं जित्वा



दुर्योधनं बन्धविमुक्तं कृतवान् तदा मम सहायकः कोऽपि न आसीत् । खाण्डववन-दहनकाले, विराटस्य गवां प्रतिसङ्ग्रहकाले वा अन्यसाहाय्यस्य प्रतीक्षा मया न कृता । अतः साहाय्यकरणेच्छा अस्ति चेत् अन्यं कञ्चित् उपकरोतु । अथवा अत्रैव स्थित्वा मम बाहुबलं किञ्चित् पश्यतु'' इति ।

एतदनन्तरं रुक्मिः महत्या सेनया सह दुर्योधनस्य समीपं गतवान् । तत्रापि आत्म-प्रशंसा तेन कृता । दुर्योधनः अपि रुक्मेः साहाय्यस्वीकारं निराकृतवान् । अतः रुक्मिः ततः अपि प्रतिगतवान् ।

एवं बलरामः रुक्मिः च कुरुक्षेत्रयुद्धे सहभागिनौ न जातौ । अन्ये सर्वे राजानः कञ्चित् एकं पक्षम् अवलम्ब्य युद्धं कृतवन्तः ।

हिरण्वतीनद्याः तीरे स्थितं पाण्डवशिबिरं प्रति दुर्योधनः शकुनेः पुत्रम् उलूकं दूतरूपेण प्रेषितवान् । सः युधिष्ठिराय, भीमाय, अर्जुनाय, कृष्णाय, नकुलसहदेवयोः कृते च दम्भपूर्णं सन्देशं प्रेषितवान् आसीत् –

''युधिष्ठिर ! भवान् रुद्राक्षधारी कपट-मार्जारः इव । भवतः सर्वोऽपि व्यवहारः कपटतापूर्णः । सहनामन्त्रः भवता जगतः वञ्चनार्थं जप्यते । क्षत्रियकुलजातेन युद्धं खलु चिन्तनीयम् ? अतः एव भवता यदा पञ्च ग्रामाः प्रार्थिताः तदा मया निराकृतिः प्रदर्शिता । युद्धे भागम् ऊढ्वा स्वस्य क्षत्रिय-कुलजातत्वं प्रमाणीकरोतु भवान् ।''

''हे कृष्ण ! भवान् अस्माकम् आस्थाने इन्द्रजालम् अवलम्ब्य किमपि विचित्रं रूपं दर्शितवान् । तेनैव रूपेण युद्धक्षेत्रम् आगच्छतु । कोऽपि वीरः मायारूपं दृष्ट्वा भीतः न भवति । 'पाण्डवाः विजयिनः सन्तः स्वराज्यं यथा प्रतिप्राप्नुयुः तथा करिष्यामि' इति सर्वत्र उद्घोष्यते खलु भवता ? शस्त्रं गृहीत्वा रणरङ्गम् आगत्य सजीवं स्थातुं शक्तं चेत् एव अग्रिमपदस्य चिन्तनं वरम् ।''

''भीम ! लम्बोदरः भवान् कथं वा युद्धं कुर्यात् ? विराटस्य पाकशालायां भवतः पौरुषं सर्वैः दृष्टम् एव । धृतराष्ट्रपुत्रान् सर्वान् संहरिष्यामि इति भवता प्रतिज्ञा कृता इति श्रुतम् । रणरङ्गम् आगत्य सजीवं कथं स्थातव्यम् इति आदौ चिन्तयतु ।''

एतया एव शैल्या तेन अर्जुनाय, नकुल-सहदेवयोः कृते, धृष्टद्युम्नाय च सन्देशः प्रेषितः आसीत् । उलूकः तान् अपि सन्देशान्

श्रावितवान् । दुर्योधनस्य सन्देशं श्रुत्वा पाण्डवपक्षीयाः सर्वे क्रुद्धाः । अतः ते उलूकम् उक्तवन्तः - ''दुर्योधनः मधुरार्थं बालः इव युद्धार्थं त्वरते । युद्धस्य फलविषये न चिन्तयति । अस्तु, वयं तस्य इच्छाम् अवश्यं पूरयिष्यामः । युद्धस्य दुष्फलम् अपि दर्शयिष्यामः'' इति ।

उलूकं प्रतिप्रेष्य युधिष्ठिरः धृष्टद्युम्नः च स्वसेनां युद्धक्षेत्रं प्रति आनीतवन्तौ । केन सह कः युद्धं कुर्यात् इति निर्णीतम् । कर्णम् अर्जुनः, दुर्योधनं भीमः, शल्यं धृष्टकेतुः, कृपाचार्यम् उत्तमौजाः, अश्वत्थामानं नकुलः, कृतवर्माणं शैब्यः, सैन्धवं युयुधानः, भीष्मं शिखण्डी, शकुनिं सहदेवः, वृषसेनम् अभिमन्युः, त्रिगर्तान् उपपाण्डवाः च सम्मुखीकुर्युः इति निश्चितम् । द्रोणाचार्यं धृष्टद्युम्नः सम्मुखीकुर्यात् इत्यपि निर्णीतम् ।

एवं कौरववीराणां प्रतियोद्धॄन् निश्चित्य धृष्टद्युम्नः पाण्डवसेनायाः व्यूहरचनां कृतवान् ।

कौरवसेनायाः नेता भीष्मः दुर्योधनस्य अपेक्षायाः अनुगुणं दलद्वयस्यापि महावीराणां स्तरं निश्चितवान् -

''कौरवपक्षे कृतवर्मा, शल्यः, सैन्धवः, कृपाचार्यः, अश्वत्थामा, द्रोणः, बाह्लीकः च अतिरथाः । अश्वत्थामा प्राणरक्षणव्यामोह-वान् अस्ति । अन्यथा तत्सदृशः महायोद्धा अन्यः न स्यात् एव । वृषसेनः अलम्बुसः नाम राक्षसः च महारथौ । सुदक्षिणः, नीलः, शकुनिः, विन्दः, अनुविन्दादयः च एक-रथाः । कर्णः कवच-कुण्डलादिभिः विहीनः, गुरुशापग्रस्तश्च अस्ति । अतः सः रथिनां गणे न परिगण्यते । सः अर्धरथत्वेन परिगणनीयः ।

पाण्डवानां गणे पञ्च पाण्डवाः अतिरथाः । अर्जुनसदृशः योद्धा पक्षद्वये अपि कोऽपि अन्यः नास्ति । तं सम्मुखीकर्तुं द्रोणाचार्यस्य मम च सामर्थ्यं यद्यपि अस्ति, किन्तु आवां वृद्धौ । अभिमन्युः, सात्यकिः, उत्तमौजाः, युधामन्युः, शिखण्डी, धृष्टद्युम्नः, सत्यजित्, घटोत्कचः च अतिरथाः । पञ्च उपपाण्डवाः महारथाः । विराटः, द्रुपदः, शिशुपालपुत्रः धृष्टकेतुः चापि महारथाः एव'' इति ।





# कथायाः अनभिज्ञः

कस्मिंश्चित् ग्रामे कश्चन क्रीडनकनिर्माता आसीत् । तस्य नाम शिवरामः इति । सः मृत्तिकया विविधानि क्रीडनकानि निर्मातुं समर्थः । पर्वदिनेषु सः साप्ताहिकवाणिज्य-स्थले यात्रास्थलादिषु च तेषां विक्रयणं करोति स्म । नवरात्रोत्सवः यदा आसन्नः तदा सः अनेकानि क्रीडनकानि सज्जीकृत-वान् । तानि वर्णमयानि कृत्वा तेषाम् आकर्षकतां वर्धितवान् सः । यदा उत्सवः अत्यासन्नः तदा सः एकस्मिन् कण्डोले तानि स्थापयित्वा ग्रामेषु विक्रयणार्थं निर्गतवान् ।

एकदा सः एवं क्रीडनकानि विक्रीय यदा प्रत्यगच्छन् आसीत् तदा विलम्बः जातः । यदा सः निर्जनप्रदेशे गच्छन् आसीत् तदा एव अन्धकारः प्रसृतः । अतः सः वेगेन पदानि स्थापितवान् । अत्रान्तरे तेन दूरे कश्चन दीपप्रकाशः दृष्टः । ततः सः किञ्चिदिव सन्तुष्टः । स च दीपप्रकाशः कस्माच्चित् गृहात् निर्गच्छति स्म । शिव-रामः तत् गृहं गतवान् । गृहस्य अन्तः कश्चन वृद्धः आसीत् । अन्तः प्रविश्य शिवरामः तं वृद्धम् अवदत् - ''आर्य ! सदूरग्रामः गन्तव्यः अस्ति मया । मध्येमार्गम् अन्धकारः प्रसृतः । किम् अहम् एतस्यां रात्रौ अत्र वासं करवाणि ?'' इति ।

''तत्र का वा विप्रतिपत्तिः ? कण्डोलं पार्श्वे स्थापयित्वा अत्र आगत्य उपविशतु । वार्तालापं कुर्वन्तौ समयं यापयाव । अहं पाकं करोमि । सम्भूय भोजनं करवाव'' इति अवदत् सः वृद्धः ।

'उत्तमं भोजनं प्राप्यते अद्य' इति चिन्तयन् शिवरामः नितरां सन्तुष्टः । स्वस्य सौभाग्यं स्मरन् सः सुखेन उपविष्टवान् ।

पाकशालां गत्वा प्रत्यागतः वृद्धः शिवरामसमीपे उपविश्य अवदत् - ''पाकः अचिरात् एव सिद्धः भविष्यति । तावत् भवान् गानं श्रावयतु'' इति ।

''गानं न ज्ञायते'' - अवदत् शिवरामः ।

''एवम् ! तर्हि कथां वा काञ्चित् श्रावयतु'' इति वृद्धः असूचयत् ।

*'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'*

''अहं कथाम् अपि न जानामि तात !'' इति अवदत् शिवरामः ।

तदा क्रुद्धः वृद्धः – ''गानं न ज्ञायते । कथा अपि न ज्ञायते ! एतादृशाय भवते किमर्थम् आश्रयः दीयते ? एतत्क्षणे एव इतः निर्गच्छतु भवान्'' इति आदिशत् ।

'अहो विलक्षणः अयं वृद्धः । एतावत्-पर्यन्तं शान्ततया स्थितः अयं क्षणाभ्यन्तरे क्रुद्धः जातः । यदि मया गानं कथाकथनं वा ज्ञातं स्यात् तर्हि एषा दुर्गतिः न अभविष्यत् । किं करवाणि, सर्वं मम दौर्भाग्यस्य फलम्' इति स्वगतं वदन् कण्डोलम् उन्नीय ततः निर्गतवान् शिवरामः । 'अयं वृद्धः दयां प्राप्य मां प्रत्याह्वयेत् अपि' इति चिन्तनम् आसीत् तस्य । किन्तु वृद्धः तं न प्रत्याहूतवान् एव ।




शिवरामः अग्रे गमनं न इच्छति स्म । 'यदि मार्गभ्रष्टता स्यात् तर्हि आरात्रि अरण्ये वासः करणीयः भवेत् । अतः यस्मात् ग्रामात् मया आगतं तं प्रति गमनम् एव वरम्' इति सः निर्णीतवान् ।

अनन्तरं सः कण्डोलं शिरसि स्थापयित्वा ततः प्रस्थितः । किञ्चिद्दूरं यदा गतं तदा कस्यचित् वृक्षस्य अधः स्थित्वा पाकं कुर्वन् कश्चित् तेन दृष्टः । अन्धकार-कारणतः पाककर्तुः परिचयः न ज्ञायते स्म ।

''शिवरामः भवान् एव खलु ? पाकपात्रे दर्व्या आलोडनं कुर्वन् भवतु । एषोऽहम् आगच्छामि'' इति सः पाककर्ता अवदत् ।

पाककर्तुः परिचयः शिवरामस्य तु न आसीत् । तेन शिवरामः कथम् अभिज्ञातः इत्यपि न ज्ञायते स्म । परोपकारबुद्ध्या शिवरामः दर्व्या आलोडनम् आरब्धवान् । महति पाकपात्रे किम् अस्तीति न ज्ञातं शिवरामेण । एतावान् पाकः कस्य निमित्तं सज्जीक्रियते इत्यपि तेन न ज्ञातम् । 'मया अपि अत्र खादनार्थं किञ्चित् प्राप्येत' इति चिन्तितवान् शिवरामः ।

दर्वीं दत्त्वा गतः जनः दीर्घकालानन्तरम् अपि न आगतः । अतः शिवरामः उच्चैः तम् आह्वयत् – ''भोः, भोः मित्र !'' इति ।

''किमर्थम् इतस्ततः दृश्यते ? दर्वी-चालनं किमर्थं स्थगितवान् भवान् ?'' इति अपृच्छत् चुल्लीस्थं पाकपात्रम् ।

एतत् श्रुत्वा भूतदर्शनं प्राप्तवान् इव शिवरामः भीतः सन् दर्वीं पार्श्वे क्षिप्त्वा ततः

## सर्वदा सन्तोषः एव

कदाचित् देशसञ्चारमग्नः कश्चन संन्यासिगणः कश्चित् ग्रामम् अगच्छत् । संन्यासिनः ग्रामपरिसरे शिबिरं निर्माय वासं कृतवन्तः । तैः सह विंशतिः गावः अपि आसन् । ते गवां सेवां कुर्वन्तः ततः प्राप्तं क्षीर-दधि-नवनीत-घृताधिकं सेवमानाः भगवन्नामकीर्तनं कुर्वन्तः नृत्यन्ति स्म ।

ग्रामीणेभ्यः केभ्यश्चित् संन्यासिनाम् एतत् सन्तोषमयजीवनं न अरोचत । तान् पीडयितुम् इच्छन्तः ते सर्वाः धेनूः कुत्रापि नीत्वा गोपितवन्तः । 'अद्य संन्यासिनः निश्चयेन कष्टम् अनुभवन्ति' इति तेषां चिन्तनम् आसीत् ।

प्रातःकालः जातः । गावः वसतौ तैः न दृष्टाः । तथापि ते सन्तोषेण नृत्यन्तः भगवन्तम् उद्दिश्य अवदन् - ''महाप्रभो, अस्माकं बन्धनं मोचितं भवता । अद्यैव वयं बदरी-केदारादिकं द्रष्टुं प्रस्थानं करिष्यामः'' इति ।

युवकाः चिन्तितवन्तः यत् एते प्रायः धेनुपालनात् कष्टम् अनुभवन्तः आसन्, अतः एव इदानीं निश्चिन्ताः सन्ति, यदि धेनवः प्रत्यर्प्येरन् तर्हि एतेषां कष्टं वर्धेत इति । अतः ते तस्यां रात्रौ अन्याः अपि विंशतिं धेनूः संयोज्य तदीयाः धेनूः प्रत्यर्पितवन्तः ।

अनन्तरदिने प्रातः गवां दर्शनेन यथापूर्वं सन्तुष्टाः संन्यासिनः सन्तोषेणैव नृत्यन्तः भगवन्तम् अवदन् - ''भगवन् ! भवतः लीला विचित्रा । विंशतिः गावः आधिक्येन दत्ताः भवता । एतासां सेवां कुर्वन्तः वयम् अत्रैव निवासं करिष्यामः । भवतः कीर्तनं च करिष्यामः । भवदिच्छा एव गरीयसी'' इति ।

एतत् दृष्ट्वा ते युवकाः नितरां विषण्णाः । 'एते संन्यासिनः सर्वासु अपि अवस्थासु सन्तोषेण एव तिष्ठन्ति । असन्तोषं नाम्ना अपि न जानन्ति ते' इति ते अवगतवन्तः ।

---

निर्गन्तुम् उद्युक्तः ।

''महान् गर्वः भवतः'' इति वदन्ती दर्वी स्वयम् उत्थाय शिवरामं प्रहर्तुम् उद्युक्ता ।

एतेन शिवरामस्य भीतिः प्रवृद्धा । सः कण्डोलस्वीकारम् अपि विस्मृत्य ततः अधावत् । तम् एव अनुसरन्ती आगता दर्वी निरन्तरं तं प्रहरति स्म ।

सौभाग्यवशात् धावनसमये मार्गे शिवरामेण एकं गृहं दृष्टम् । गृहस्य द्वारं पिहितं न आसीत् । अतः सः झटिति अन्तः प्रविश्य द्वारं पिधाय दीर्घं निःश्वसितवान् । तत् तु तस्य वृद्धस्यैव गृहम् आसीत् ।

''किम् सञ्जातम् ? किमर्थं भीतः भवान् ?'' इति अपृच्छत् वृद्धः ।

शिवरामः प्रवृत्तं सर्वं विवृतवान् । एतत् श्रुत्वा सन्तोषं प्रकटयन् सः वृद्धः - ''यदि एतादृशी काचित् कथा भवता पूर्वम् एव उक्ता स्यात् तर्हि अहं भवन्तं बहिः न अप्रेषयिष्यम् । अस्तु, पाकः सिद्धः अस्ति । भोजनार्थं आगच्छतु'' इति अवदत् ।





# अग्नेः उद्दीपकः

रामनाथोपाध्यायः जनार्दनस्वामिनः अर्चकः । सः प्रतिदिनं विष्णुप्रशस्ति-मन्त्रान् पठति स्म । भगवतः नैवेद्यार्थं पाकम् अपि सः स्वयम् एव सज्जीकरोति स्म । पाकार्थम् अग्निः आवश्यकः खलु ? तदर्थं सः शमीवृक्षखण्डेन निर्मितस्य अरणेः साहाय्येन प्रतिदिनं नूतनतया एव अग्निम् उत्पादयति स्म ।

द्वादशवर्षीयः कश्चन अनाथबालकः तेन सह वसति स्म । सर्वेषु कार्येषु उपाध्यायस्य साहाय्यं कुर्वन् सः, अवकाशः यदा प्राप्यते तदा वेदं पठति स्म उपाध्यायात् ।

एकदा उपाध्यायः ज्वरग्रस्तः जातः । तस्य चिकित्सार्थं वैद्यः आनायितः । वैद्यः आगत्य उपाध्यायं परीक्ष्य - ''विशेषचिन्ता काऽपि करणीया नास्ति । मया औषधं दीयते । दिनद्वयं श्रमः न करणीयः । शीतलं जलं न पातव्यं च'' इति उक्त्वा औषधं दत्त्वा - ''पुनः आगच्छामि'' इति उक्त्वा गन्तुम् उद्युक्तः ।

तदा उपाध्यायः हसन् - ''वैद्यः ऋणदाता च प्रस्थानसमये 'पुनः आगच्छामि' इति न वदेत्, प्रत्युत 'गच्छामि' इति वदेत्'' इति अवदत् ।

उपाध्यायस्य एतत् वचनम् अपमाननाय अमन्यत वैद्यः । अतः सः उपहासमिश्रितेन स्वरेण अवदत् - ''ग्रहाणां गतिं वदन् ज्योतिषिकः स्वगतिं ज्ञातुम् अशक्नुवन् गर्ते पतति इति श्रूयते । सर्वरक्षकस्य भगवतः जनार्दनस्य एव पूजकः भवान् । एवं स्थिते सः एव मन्दिरात् किमर्थं न आनायितः चिकित्सार्थम् ? यदि सः आनायितः स्यात् तर्हि मन्मुखात् - 'पुनः आगच्छामि' इति वचनं श्रोतव्यं न अभविष्यत्'' इति ।

एतत् श्रुत्वा उपाध्यायः खेदेन उक्तवान् - ''भगवान् सर्वरक्षकः सर्वव्यापी च । सः मन्दिरमात्रे निवसति इति चिन्तनम् अयुक्तम् । सर्वत्र निवसति सः । तथापि पापदुःखादि-निवेदनार्थम् अनुग्रहप्रार्थनार्थं च वयं तं मन्दिरे प्रतिष्ठापयामः । यः तस्मिन् सुदृढं विश्वसिति तं सः निश्चयेन रक्षिष्यति एव'' इति ।

''कथनम् अन्यत् । व्यवहारः अन्यः । सः एव रक्षिष्यति इति उच्यते । किन्तु रोगात्



रक्षणार्थं वैद्यः आनाय्यते । अतः वेदान्तविचारः श्रवणमात्ररमणीयः, न तु अनुसरणयोग्यः । वेदान्तश्रवणात् न भवता भोजनं प्राप्यते, न वा मया । आस्तां तावत् । एषोऽहम् आगच्छामि । न, न । गच्छामि'' इति उक्त्वा वेगेन परिवृत्य प्रस्थितवान् वैद्यः । परिवर्तनसमये प्रमादवशात् सः स्तम्भेन घट्टितः अभवत् । ततः पतितः सः विसंज्ञः जातः । तदा उपाध्यायः एव बालकस्य साहाय्येन वैद्यस्य प्रथमोपचारं कृतवान् । अल्पे एव काले वैद्यः सचेतनः जातः ।

मन्दम् उत्थाय उपविष्टः वैद्यः - ''मान्यवर ! सर्वस्यापि कार्यस्य किमपि कारणं भवति इति श्रूयते । मया भवतः उपहासः कृतः । तस्य परिणामतः वैद्येन सता मया एव भवतः साहाय्यं प्राप्तव्यम् अभवत् । क्षन्तव्यः अहम्'' इति उपाध्यायम् उक्त्वा ततः निर्गतवान् ।

एतदनन्तरम् उपाध्यायस्य कीर्तिः प्रवृद्धा । जनाः तद्विषये परस्परं वदन्ति स्म - ''उपाध्यायः महामहिमवान् । अरणितः अग्निम् उत्पादयितुम् सः एकः एव समर्थः । यः तं निन्दति, यश्च तस्य अहितम् उपेक्षां वा करोति तं जनार्दनस्वामी दण्डयति एव । वैद्यस्य घटना एव अत्र निदर्शनम्'' इति ।

एतत् सर्वम् उपाध्यायः अपि श्रुतवान् । 'अहं वस्तुतः महामहिमवान् अस्मि एव' इति चिन्तयन् सः महान्तं गर्वं प्राप्तवान् ।

अत्रान्तरे कदाचित् झञ्झावातकारणतः मन्दिरस्य ध्वजस्तम्भः पतितः । ग्रामीणाः प्रतिगृहं गत्वा धनं सङ्गृह्य नूतनस्य ध्वजस्तम्भस्य निर्माणं कारयित्वा तस्य प्रतिष्ठापनार्थं योग्यं मुहूर्तं निश्चितवन्तः । मुहूर्तदिनस्य दशभ्यः दिनेभ्यः पूर्वम् उपाध्यायेन वार्ता प्राप्ता यत् दूरग्रामवासी कश्चन बन्धुः दिवं गतः इति । मृतस्य बन्धोः अन्तिमसंस्कारं कर्तुम् अर्हः दायादः कोऽपि न आसीत् । अतः स च भारः उपाध्यायेन एव वोढव्यः आसीत् । यस्मिन् दिने ध्वजस्तम्भस्य प्रतिष्ठापनं करणीयं तस्मिन् एव दिने मृतस्य बन्धोः और्ध्वदैहिकसंस्काराः अपि करणीयाः आसन् ।

उपाध्यायः मरणदिने गत्वा बन्धोः दहनसंस्कारादिकं निर्वर्तितवान् । ततः 'दशमादिषु दिनेषु किं किं करणीयम्' इति शिष्यं निर्दिश्य त्वरया प्रत्यागतवान् सः ।

बालकः उपाध्यायम् उक्तवान् आसीत् यत् सर्वाः क्रिया विधिवत् मया करिष्यन्ते एव इति । तदनुगुणम् एव आचरितं तेन । और्ध्वदैहिककर्माणि सर्वाणि समाप्य दशमे दिने सः उपाध्यायसमीपम् आगतवान् ।

ध्वजस्तम्भप्रतिष्ठापनमुहूर्तः आसीत् मध्यरात्रे । समग्रे ग्रामे उत्साहपूर्णं वातावरणं दृश्यते स्म । ऋत्विग्भिः यज्ञकुण्डं निर्माय सर्वसाम्ग्र्यः सज्जीकृताः । अरणितः अग्निम् उत्पाद्य यज्ञक्रिया अनुष्ठातव्या आसीत् ।

उपाध्यायः गर्वेण हस्तेन अरणिं गृहीत्वा जनान् उद्दिश्य - ''त्रेतायुगे महर्षिः नारदः एतं देवालयं प्रतिष्ठापितवान् इति श्रूयते । अतः एव वीणापाणेः नारदस्य सान्निध्यम् अद्यापि अत्र अस्ति इति जनाः विश्वसन्ति । अहम् अग्निदेवम् आवाहयामि । ऋत्विजः मन्त्रोच्चारणं कुर्वन्तः देवताभ्यः हविः अर्पयन्ति । ततः वयं सर्वे देवानाम् अनुग्रहपात्राणि भविष्यामः'' इति उक्तवान् ।

अन्येषु दिनेषु अल्पेन एव प्रयासेन अरणितः अग्निः उत्पन्नः भवति स्म । किन्तु तस्मिन् दिने उपाध्यायेन बहुविधाः प्रयत्नाः बहुधा कृताः चेदपि अग्निः तु न उत्पन्नः । उपाध्यायः श्रान्तः, खिन्नः, लज्जितश्च सन् मौनेन कोणे उपविष्टवान् ।

एतदनन्तरं तत्र उपस्थिताः वेदविद्वांसः प्रयत्नं कृतवन्तः । तैः अपि साफल्यं न प्राप्तम् । ग्रामे पुण्यात्मत्वेन ख्यातानां द्वारा अपि एतत् कार्यं कारितम् । सोऽपि प्रयत्नः व्यर्थः एव ।

उपाध्यायस्य नेत्राभ्याम् अश्रूणि निर्गतानि ।



तस्य हृदयं व्यथापूर्णं जातम् । सः हृत्पूर्वकं भगवन्तं प्रार्थयत् - ''हे प्रभो ! मया किं वा अपराद्धम् ? मां क्षाम्यतु देव ! सेवकं माम् एतस्मात् घोरापमानात् रक्षतु हे भगवन् !'' इति ।

सर्वेषां प्रयत्नाः यदा विफलाः तदा उपाध्यायस्य शिष्यः बालकः अग्रे आगत्य अपृच्छत् - ''गुरुवर्य ! किम् अहम् अपि सकृत् प्रयत्नं करवाणि ?'' इति ।

''भवता मम मृतबन्धोः और्ध्वदैहिक-कार्याणि कृतानि । अतः वर्षं यावत् भवता यज्ञकर्मणि भागः न वोढव्यः'' इति असन्तोषेण अवदत् उपाध्यायः ।

तत् श्रुत्वा कश्चन वेदपण्डितः अवदत् - ''मृतस्य संस्कारः यज्ञतुल्यः । तादृशे भागं

गृहीतवान् एषः विशेषपुण्यं सम्पादितवान् अस्ति । अतः एषः अग्नि-उत्पादनार्थं प्रयत्नं यदि करोति तर्हि न कोऽपि दोषः'' इति ।

तदा उपाध्यायः - ''युक्तम् उक्तं भवता । मानवसेवा एव माधवपूजा इत्येतत् विस्मृतम् आसीत् मया । प्रेतसंस्कारकर्म कोटियज्ञतः अपि श्रेष्ठम् । अतः अयं बालकः धन्यः । अरणितः अग्नेः उत्पादनं मया एकेन एव कर्तुं शक्यते इति मम महान् गर्वः आसीत् । स च इदानीं भग्नः । भगवान् बालकद्वारा एव अग्निम् उत्पादयितुम् इच्छेत् अपि । भगवतः सङ्कल्पं को वा जानाति ?'' इति उक्त्वा बालकस्य प्रयत्नाय अनुज्ञां दत्तवान् ।

बालकः आदौ गुरुम् उपाध्यायं नमस्कृतवान् । अनन्तरम् अग्निदेवम् आवाह्य - ''यदि अहं गुरोः आज्ञापालकः स्यां, यदि च गुरौ भगवति च भक्तिः मम स्यात् तर्हि अग्निः उत्पन्नः भवतु'' इति उक्त्वा अरणि-मथनं कृतवान् । तत्समनन्तरम् एव ततः अग्निः उत्पन्नः । उपस्थिताः सर्वे जनाः वेदपण्डिताश्च बालकस्य प्रशंसां कृतवन्तः ।

यज्ञसमाप्तेः अनन्तरं वेदमन्त्रपुरस्सरं ध्वजस्तम्भस्य प्रतिष्ठापनं सम्पन्नम् ।

अनन्तरदिने जनार्दनस्वामिनः नैवेद्य-सज्जीकरणकालः यदा आगतः तदा उपाध्यायः शिष्यम् आहूय - ''भवान् एव अरणिमथनं कृत्वा अग्निम् उत्पादयतु'' इति आदिशत् ।

''अहं गुरोः स्थाने स्थातुं न अर्हामि । प्रेतसंस्कारात् कोटियज्ञफलं प्राप्यते इत्येतत् निरूपयितम् एव भगवान् मह्यम् अग्नेः उत्पादनस्य अवकाशं दत्तवान् स्यात्'' इति उक्त्वा बालकः अग्न्युत्पादनकार्यं विनयेन निराकृतवान् ।

तदा उपाध्यायः मनसा भगवन्तं स्मरन् अग्न्युद्दीपनार्थं प्रयत्नं कृतवान् । आश्चर्यं नाम क्लेशं विनैव अग्निः उत्पन्नः एतदवसरे । सर्वथा गर्वभावरहितः उपाध्यायः जनार्दन-स्वामिनं विनयेन नमस्कृतवान् ।

ततः केषाञ्चित् वर्षाणाम् अनन्तरं सः एव बालकः उपाध्यायस्य स्थाने तिष्ठन् स्वकर्तव्यनिर्वहणेन सुविख्यातः अभवत् ।



# मनसः मालिन्यम् ...

ग्रामात् अनतिदूरे एकम् अरण्यम् आसीत् । तत्र ग्रामजनाः धेनूः चारयन्ति स्म । कदाचित् कश्चन कृषिकः विवाहनिमित्तं प्रस्थितः तेन मार्गेण गच्छन् आसीत् ।

कश्चन अजः गणात् पृथग्भूत्वा जलपानार्थं जलाशयसमीपं गच्छन् आसीत् । जलाशयतीरस्था मृत्तिका पङ्कमयी आसीत् । जलं च तीरात् दूरे आसीत् । जलाशयसमीपं गतस्य अजस्य पादाः पङ्के निमग्नाः । सः ततः उत्थानार्थं यथा यथा प्रयत्नम् अकरोत् तथा तथा पङ्कनिमग्नता प्रवृद्धा । उत्थातुम् अशक्तः सः क्रन्दनम् अकरोत् ।

एतत् दूरात् एव दृष्टवान् ग्रामीणः आर्द्रहृदयः जातः । सः कटिं बद्ध्वा जागरूकतया गत्वा अजम् उन्नीय तीरे शुष्कप्रदेशे स्थापितवान् । अजः शरीरे लग्नस्य पङ्कस्य अपनयनार्थं वेगेन शरीरम् अकम्पयत्, धावन् गत्वा गणं प्राविशत् च । किन्तु अत्रान्तरे पङ्ककणाः ग्रामीणस्य वस्त्रेषु लग्नाः । तदीयं वस्त्रं मलिनं जातम् ।

एतत् दृष्ट्वा पुत्रः अवदत् - ''तात ! भवता अजस्य रक्षणार्थं गतं यत् तस्य फलम् एतत् । किं मलिनं वस्त्रं धृत्वा एव विवाहं प्रति गम्यते ?'' इति ।

तदा पिता हसन् अवदत् - ''वत्स ! वस्त्रं मलिनं चेत् क्षालनात् मालिन्यं निवारयितुं शक्यते । साहाय्यं कर्तुं समर्थः अपि अहं यदि साहाय्यं कर्तुम् उद्युक्तः न स्यां तर्हि मम मनः पापलेपेन मलिनम् अभविष्यत् । तस्य अपसारणं सर्वथा असाध्यम् । एषः परीक्षाकालः । अत्र अस्माकं भविष्यं निर्णीतं भवति । यदि कष्टम् अनुभवन्तम् अजं दृष्ट्वा अपि अहम् अग्रे गतवान् स्यां तर्हि मम कष्टकाले कदाचित् अहं भगवन्तं कथं वा साहाय्यार्थम् आह्वातुम् अर्हः भवेयम् ? अल्पः अपि परोपकारः मानवं देवत्वं प्रापयति । परोपकारकाले कष्टं न चिन्तनीयम्'' इति ।



# चिन्त्यताम् ! अभिव्यज्यताम्

एतस्मिन् अङ्के प्रकाशितानां प्रश्नानाम् उत्तरम् अग्रिमाङ्के प्रकाशयिष्यते । ततः पूर्वं - **चन्दमामा (संस्कृतम्) भारतावगति-प्रश्नोत्तरम्, अक्षरम्, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५** इत्येतस्मै सङ्केताय उत्तरं प्रेषयितुम् अर्हन्ति भवन्तः । किन्तु एतस्यां प्रश्नोत्तरस्पर्धायां स्वस्य भागग्रहणार्थम् अधोनिर्दिष्टायाः सर्जनात्मककृतेः प्रेषणम् अनिवार्यम् ।

एतस्यां सञ्चिकायां प्रकाशितासु कथासु का भवते विशेषतः अरोचत, किमर्थं च अरोचत इति शतशब्दैः एकं पत्रं लेखनीयम् । अध्यापकस्य पोषकस्य वा हस्ताक्षरेण प्रमाणीकृत्य नाम, वयः, कक्ष्यां, विद्यालयनाम (यदि अधीयमानम् अस्ति तर्हि), पूर्णसङ्केतं च लिखित्वा उपर्युक्तसङ्केताय प्रेषयन्तु ।

प्रथमपारितोषिकं **रू. १००० - ००**    प्रोत्साहकपारितोषिकाणि (पञ्च)
द्वितीयपारितोषिकं **रू. ५०० - ००**    प्रतिजनं **रू. २०० - ००**

चन्द



## भारतावगतिप्रश्नः - ४

अन्धकारमयी रात्रिः । सर्वत्र नीरवता । पावननद्याः तीरे श्मशाने काश्चन चिताः ज्वलन्ति स्म । एका स्त्री रुदती श्मशानम् आगतवती । मृतं पुत्रम् आलिङ्ग्य आगतवती आसीत् सा । श्मशाने शवदहनं करणीयं चेत् शुल्कं दातव्यम् आसीत् । स्वामिनः प्रतिनिधित्वेन श्मशानरक्षकः एव शुल्कं सङ्गृह्णाति स्म । शुल्कं दातुं सा महिला न शक्नोति स्म । यतः तस्याः समीपे एका वराटिका अपि न आसीत् । 'शुल्कदानं विना शवदहनं न अनुमन्यते' इति उक्तवान् श्मशानरक्षकः । अत्रान्तरे तेन सा स्त्री अभिज्ञाता । सा न अन्या, अपि तु तस्य पत्नी एव । मृतः बालकः तदीयः पुत्रः एव !

सः श्मशानरक्षकः कः ? तस्य पत्नी का ? तच्च श्मशानं कुत्र आसीत ?

निम्नलिखितानां पौराणिकजनानां स्थानानां च पारस्परिक सम्बन्धः कः ?



## चन्दमामा - विविधभाषामयी -

# !! पुरस्कारः प्राप्यताम् !!!




१. समुद्रतटीयनगरस्य पुम्पुहारस्य गरिमाणं वर्णयन्ती प्राचीनकृतिः का ?

२. सः कृतिकारः कः, यस्य च विषये श्रूयते यत् सः कथानां सङ्ग्रहं कुर्वन् समग्रे भारतवर्षे भ्रमणं कृतवान् आसीत् इति ?

३. सावित्री-सत्यवतोः आख्यानकं कस्यां प्राचीनकृतौ दृश्यते ?

४. तमिळुभाषीय-हिन्दीभाषीयौ तौ कवी कौ, यौ च रामायणकथां जनप्रियं कृतवन्तौ ?

५. कः प्रसिद्धः प्राचीनभारतीयदार्शनिकः नास्तिकः आसीत् ?




**नियमाः –**

१. चन्दमामा इण्डिया लि., संस्थायाः उद्योगिनः, तेषां बान्धवाः, सहयोगिनः च एतस्यां स्पर्धायां भागग्रहणे अर्हाः न भवन्ति ।

२. निर्णायकानां निर्णयः एव अन्तिमः । एतद्विषये पत्रव्यवहारः न करणीयः ।

३. येषाम् अक्षराणि सुन्दराणि न भवन्ति, तेषाम् उत्तरं तिरस्क्रियते ।

४. परिणामः सप्टेम्बर् – २००० सञ्चिकायां प्रकाशयिष्यते ।

५. उत्तराणि प्राप्तुम् अन्तिमदिनाङ्कः – **३० जून्, २०००**

**अ. कृष्णः – विदर्भः**
**आ. बलभद्रः – कुशस्थली**
**इ. नलः – निषधः**
**ई. मार्कण्डेयः – पुष्पभद्रतीर्थम्**
**उ. गुहः – शृङ्गवेरपुरम्**

## अभिन्नपरम्पराद्योतिका

# भारतम्

## पूर्वम् इदानीं च

## श्रीनगरम्

### सुन्दरं प्रसन्नं च

श्रीनगरं जम्मूकाश्मीरराज्यस्य राजधानी । 'श्रीः' इत्येतस्य सम्पत्तिः, शोभा, सौभाग्यं, प्रसन्नता इत्यादयः अनेके अर्थाः । श्रीनगरं तान् सर्वान् अर्थान् अपि द्योतयति । एतत् द्योतनं न नाममात्रेण, अपि तु वस्तुतः अपि । तादृशः विशेषानुग्रहः श्रीनगरे प्रकृत्याः ! समुद्रतलात् १७६८ मीटर्-उन्नते स्थले स्थितं श्रीनगरं 'दल'सरोवरेण, असङ्ख्यैः उद्यानैः च शोभते । झेलम्नदी एतां शोभां विभूषयति ।

काश्मीरविषये ऐतिह्यम् एवं श्रूयते - ''पूर्वं स च प्रदेशः जलमयः आसीत् । तत्र जलोद्भवः नाम राक्षसः निवसति स्म । जलम् एव दुर्गं तस्य । तत्र वसन् सः हठात् आक्रमणेन परितः स्थितान् प्रदेशान् लुण्ठयित्वा नाशयित्वा च जलं शरणं गच्छति स्म । यावत् सः जले तिष्ठति तावत् तं कोऽपि संहर्तुं न अर्हति स्म । तादृशः विशेषवरः प्राप्तः आसीत् तेन । महर्षिः कश्यपः राक्षसस्य एतत् रहस्यं ज्ञातवान् । सः विशेष-शक्तियुक्तस्य हलस्य साहाय्येन जलाशयस्य जलसङ्ग्रहं निवारितवान् । यदा तत्र जलं न स्थितं तदा राक्षसः शक्तिहीनः सन् मरणं प्राप्तवान्'' इति ।



ऐतिहासिकग्रन्थत्वेन प्रसिद्धा कल्हण-विरचिता 'राजतरङ्गिणी' वदति यत् श्रीनगरं सम्राजा अशोकेन प्रतिष्ठापितम् इति । एतत् प्रतिष्ठापनीयम् इति तस्मै प्रेरणां दत्तवती तदीया पुत्री चारुमती । कदाचित् पित्रा सह एतत् स्थलम् आगता सा दलसरोवरस्य सौन्दर्यं दृष्ट्वा साभिलाषम् उक्तवती - 'अहो ! ध्यानार्थं सुयोग्यं स्थलम् एतत् !' इति । एतेन स्फूर्तिं प्राप्य अशोकः अत्र एकं बौद्धविहारं निर्मापितवान् । गच्छता कालेन विहारं परितः नगरं प्रवृद्धम् ।

'श्रीनगरम्' इत्येतत् नाम केन कृतम् इति तु न ज्ञायते । स्थलपुराणं ज्ञापयति यत् एतस्य नगरस्य पुरातनं नाम सूर्यनगरम् इति आसीत् इति ।

१९४७ तमे वर्षे भारतं यदा स्वतन्त्रं

जातं तदा जम्मूकाश्मीरराजः सूचितः यत् भवद्देशः पाकिस्थाने अन्तर्भवेत् उत भारते इति निर्णयाधिकारः भवतः एव इति । यावत् सः अन्तिमनिर्णयं न प्राप्तवान् ततः पूर्वम् एव पाकिस्थानसैन्यं पर्वतीयजनान् प्रचोद्य आक्रमणम् अकरोत् । अनन्यशरणः राजा भारतस्य अङ्गताम् अङ्गीकृतवान् । भारतीय-सैन्येन पाकिस्थानीयाः आक्रामकाः यथायोग्यं दण्डिताः । तत्काले लडाकजनपदस्य भूयान् भागः पाकिस्थानाधीनत्वेन स्थितः अभवत् । संयुक्तराष्ट्रसङ्घेन मध्ये प्रविश्य युद्ध-स्थगनादेशः दत्तः यत्, विभाजनरेखा लेखनीया इति अभ्यर्थितं यत् तस्य फलम् एव एतत् ।

काश्मीरस्य शान्तेः भङ्गार्थं पाकिस्थानेन निरन्तरप्रयत्नाः क्रियमाणाः सन्ति इति तु जगत् एव जानाति । भयोत्पादकानां प्रोत्साहनेन, भाटकसैनिकान् वाममार्गेण काश्मीरं प्रति प्रेषणेन च पाकिस्थानं भारतस्य सहनां परीक्षते । भीत्या, अगतिकगत्या वा न ज्ञायते, पाकिस्थानस्य उग्रवादिप्रोत्साहन-प्रवृत्तौ ह्रासः दृश्यते एषु दिनेषु ।

काश्मीरे दर्शनीयानि स्थलानि सन्ति अनेकानि । चरिष्मासाही, निशात् बाग्, शालिमार् बाग् इत्यादीनि उद्यानानि, हरि-पर्वत-शङ्करपर्वतादीनि च तेषु अन्यतमानि । शङ्करपर्वतशिखरे शङ्कराचार्यः, श्री अरविन्द-वर्यः च ध्यानं कृतवन्तौ इति श्रूयते । अत्रत्ये हजरत्बाल्मन्दिरे प्रवादिनः महम्मदस्य पवित्रः केशः रक्षितः अस्ति । वसतिगृहैः, नौकागृहैः, अन्यैः आनुकूल्यैः च उपेतम् आधुनिकं श्रीनगरं सदापि यात्रिणः स्वागतीकरोति । प्रवासोद्यमः एव एतस्य नगरस्य आयमूलम् । एतत्परिसरे अनेकाः शैक्षणिकसंस्थाः अपि विराजन्ते । जम्मूकाश्मीरविश्वविद्यालयः काश्मीरविश्वविद्यालयः, शेर्-ए-काश्मीर-स्मारक-कृषिविज्ञान-तन्त्रज्ञान-विश्वविद्यालयः इत्यदयः, अन्ये बहवः महाविद्यालयाः, अनेकानि विद्यासंस्थानानि च अत्र विराजन्ते ।

अत्रत्यं हस्तोद्यमकौशलम् अपि जगत्प्रसिद्धम् एव । मृदुवस्त्रकटनिर्माणे, ऊर्णवस्त्रनिर्माणे, राङ्कवसज्जीकरणे, काष्ठ-शिल्पे च तत्रत्यानां कौशलम् अत्यपूर्वम् । अत्र प्राप्यमाणाः पुष्पकेसराः, सुगन्ध-द्रव्यं च पाके, सुगन्धद्रव्यनिर्माणे, औषधनिर्माणे च विशेषतः उपयुज्यन्ते ।





## कटाक्षेण प्रपञ्च-वीक्षणम्

# पणीकरणप्रवृत्तिः ज्ञापयति किञ्चित्....

प्राचीने काले ओलम्पिक्क्रीडाः महता उत्साहेन क्रीड्यन्ते स्म । किन्तु केनचित् कारणेन तासाम् आयोजनं स्थगितम् । ततः १८९६ तमे वर्षे तासां पुनरारम्भः कृतः ।

प्राचीनकालिकासु ओलम्पिक्क्रीडासु विजयी आलिव्पत्रैः रचितं किरीटं धरति स्म । तत् श्रेष्ठतायाः प्रतीकम् आसीत् । क्रीडापटोः सामर्थ्यस्य, कौशलस्य, सत्त्वस्य, सहिष्णुतायाः च अनुवर्तनं यथा भवेत् तथा सच्चारित्र्यस्य, धैर्यस्य, प्रामाणिकतायाः चापि अनुवर्तनं भवेत् इति उद्देशेन ते क्रीडापरम्परां पोषयन्ति स्म ।

ओलम्पिक्क्रीडाः उज्जीविताः आधुनिकैः, किन्तु सा यस्याः गुणपरम्परायाः प्रातिनिध्यं वहति स्म सा च परित्यक्तप्राया । एषु दिनेषु 'क्रीडास्पर्धासु भागग्रहणं धनसम्पादनाय' इत्येषः भावः दृढमूलः दृश्यते । क्रीडापटवः वैयक्तिकपारम्यं क्रीडास्फूर्तिं च आत्मना सह नयेयुः । समये प्राप्ते समूहभिमानं दर्शयेयुः । ते यदा जयं प्राप्नुवन्ति तदा तत्तद्देशजनाः महता उत्साहेन तेषां प्रोत्साहनं कुर्युः । किन्तु अद्य हा हन्त ! किं प्रवर्तते ! क्रीडापटुभिः क्रीडास्फूर्तिः विस्मृता दृश्यते ! ते धनार्थं स्वार्थसाधनार्थं वा क्रीडन्तः दृश्यन्ते !!

यदा उद्देशः कलुषितः भवति तदा उद्दिष्ट-कार्यस्य स्फूर्तिः पावित्र्यं च विनश्यति । स्पर्धाभागिनः जयप्राप्त्यर्थं मादकौषध-सेवनरूपादिकम् अनुचितं मार्गम् अवलम्बमानाः दृश्यन्ते बहुधा । 'भारतस्यैव जयः यथा स्यात् तथा क्रीड्यते चेत् जयहेतु-भूतेभ्यः प्रभूतं धनं दीयते इति दक्षिणाफ्रिका-क्रिकेट्गणीयाः केचन प्रलोभिताः आसन्' इति काचित् वार्ता बहुधा श्रूयते अद्य । वस्तुस्थितेः अन्वेषणार्थं विशेषप्रयत्नः प्रचलति । अत्र अपराधिनः ये केऽपि स्युः नाम, एतावत् तु स्पष्टं यत् एतादृशी प्रवृत्तिः तु न अवास्तविकी इति ।

एतत् नितराम् अवमानकरम् । यदि एतदवसरे वयं विवेकं प्राप्य समस्यानिवारणार्थं यथायोग्यम् उपायं न आश्रयेम तर्हि अग्रे इतोऽपि घोरापमानस्थितिः सम्मुखीकरणीया भवेत् । क्रीडायाः अतिप्रामुख्यदानप्रवृत्तिः परित्यक्तव्या । देशस्य भवितव्यता क्रीडाम् एव अवलम्बते इति न चिन्तनीयम् ।



क्रीडाबोधनसमये एव सर्वैः अपि देशाः क्रीडास्फूर्तिविषयम् अपि बोधयेयुः । यदि योग्या दृष्टिः आश्रिता स्यात् तर्हि जीवनम् अपि क्रीडायेत ।

क्रीडापरिणामम् अवलम्ब्य पणीकरण-प्रवृत्तिः या एषु दिनेषु विशेषतः प्रवृद्धा सा पूर्णतः निषेद्धव्या । ये तां प्रवृत्तिं दर्शयन्ति ते निर्दयं दण्डनीयाः । क्रीडा वाणिज्यरूपं कदापि न प्राप्नुयात् ।

सुप्रसिद्धः लेखकः जार्ज् आर्वेल्वर्यः 'क्रीडास्फूर्ति'नामके स्वकीये प्रबन्धे लिखति – 'गम्भीरक्रीडानां जनप्रियतानिमित्तकक्रीडानां च न कोऽपि सम्बन्धः । जनप्रियतानिमित्तक-क्रीडाः असूया, द्वेषः, डम्भाचारः, नियमोपेक्षा, हिंसा इत्यादीनां प्रतीकभूताः । स्पष्टशब्दैः वक्तव्यं चेत् ताः गोलकप्रयोग-रहितयुद्धानि इव'' इति ।

परिस्थितिः कथं शोचनीया अस्ति इत्येतत् स्मारितवान् अस्ति सः । यदि क्रीडास्वरूपे परिवर्तनं न सम्पाद्यते तर्हि क्रीडा प्रहसनायेत ।

# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ? समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -



चन्दमामा
(संस्कृतम्)
'अक्षरम्'
८ उपमार्गः
गिरिनगरम्
बेङ्गलूरु-५६००८५



युक्ता शीर्षिका जून् - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका द्विसहस्रतमवर्षस्य अगस्त्मासे प्रकाशयिष्यते ।

## अभिनन्दनानि



'एप्रिल्'स्पर्धाशीर्षिकाप्रेषकः-

*अरक्षित पुष्टि*

काठुआपाठणा,
आलिपिङ्गल, जगत्सिंहपुरम्,
ओडिशा - ७५४ १०३



प्रथमचित्रम् - आनन्दः क्रमणात् अपि ।
द्वितीयचित्रम् - आमोदः दोलनात् एव ।

चन्दमामायाः वार्षिकं ग्राहकशुल्कं -
भारते रू.१२० - ००

---

Payment in favour of CHANDAMAMA INDIA LIMITED for details address you enquires to : Publication Division, Chandamama Buildings, Vadapalani, Chennai-600 026

**SUBSCRIPTION AGENTS INVITED.**

Contact Circulation Manager, CHANDAMAMA INDIA LTD, Chandamama Bldgs., Vadapalani, Chennai - 600 026.

